( Jyotish Section 2 )

'Master' Mani Mala's Third Mani




# THE JATAKA PADDHATI

OF

## SHRI KESHAVA DAIVAJNA

Edited with

Sanskrit and Hindi Commentaries

BY

Pt. Shri Sita Ram Jha J. A., J. T.

AND

Explanatory Notes on the Mathematical portion

BY

**Pt. Ramadhin Sharma.**


PUBLISHED BY

MASTER KHELARI LAL & SONS.,

SANSKRIT BOOK DEPOT

KACHAURI GALI,

BENARES CITY.

1934

*Price Rs 1 As 4*

ज्यौतिषविभागे-२

मास्करमणिमालायास्तृतीयो मणि



श्रीकेशवदैवज्ञविरचिता

# जातकपद्धतिः ।



मिथिला-देशान्तर्गत-चौगमानिवासि—काशीस्थ संन्यासि-संस्कृत-पाठशालाध्यापक-ज्यौतिषाचार्य-तीर्थ-पण्डित—

श्रीसीतारामशर्मकृतया

सर्वमनोरमाख्यया

सोपपत्तिसंस्कृतभाषाव्याख्यया विभूषिता ।



घोघयानिवासिज्यौतिषतीर्थपण्डित—

श्रीरामाधीनशर्मकृतया

उदाहरणदीपिकया सहिता ।



श्रीमद्वैद्यनाथपूजशर्मकृतसयुक्तिकोदाहरणचक्रेण समलङ्कृता ।



सेयं—

मास्टर खेलाड़ीलाल एण्डसन्स्-

"संस्कृत बुकडिपो" स्वामिमहोदयैः प्रकाशिता ।







द्वितीयावृत्ति ] मूल्यं सपादरूप्यकम् [ सन् १९३५

भास्वरमणिमालाया ज्यौतिषमञ्जुलमणिस्तृतीयोऽयम् ।
श्रीविश्वेशपदेपदेभ्यः सादरमादौ समर्प्यते भक्त्या ॥

## प्रस्तावना ।

समस्तैरपि दैवज्ञैर्विदितैवास्ति भारते ।
श्रीमत्केशवदैवज्ञकृता "जातकपद्धतिः" ॥
नवमन्थप्रसिद्ध्यै हि काचिद् भवति भूमिका ।
अलं जगत्प्रसिद्धायास्तयाप्यस्याः सुपद्धतेः ॥
यद्यप्यस्याः कृता टीका पूर्वैः "प्रौढमनोरमा" ।
अन्यैस्तदनु दैवज्ञैरन्या "बालमनोरमा" ॥
नाद्या प्रौढान्यविस्तुष्ट्यै नान्या बालान्यविन्मुदे ।
नैताभ्यां मध्यवित्तुष्टिर्जातेत्यस्त्यविरोहितम् ॥
वस्तुतोऽन्वर्थनामत्वं गतं टीकाद्वयेन्त्वतः ।
कृता सर्वजनप्रीत्यै मया सर्वमनोरमा ॥
अत्रादौ स्पष्टया देवगिरा व्याख्याऽस्ति शोभना ।
ततस्तदुपपत्तिश्च ततष्टीका नृभाषया ॥
स्वसतीर्थेन मित्रेण श्रीरामाधीनशर्मणा ।
रचिता रचिता पश्चादुदाहरणदीपिका ॥
अन्ते संरचितं श्रीमद्दैवज्ञापृच्छशर्मणः ।
जन्मपत्रं च तेनैव रचितं युक्तिसंयुतम् ॥
उत्तमा गुणमेवास्या दृष्ट्वा गच्छन्तु पुष्टताम् ।
अधमा दोषमालोक्य तन्वन्तु निजदुष्टताम् ॥
उभावपि विगुणवन्तो मध्यमा यान्तु तुष्टताम् ।
इत्येव रचिता टीका मया जातकपद्धतेः ॥
अतो धन्यतमं मन्या भृशमाशास्महे वयम् ।
यद् दृष्ट्वेमां भविष्यन्ति सर्वे सन्तुष्टमानसाः ॥
यात्र मानवधर्मत्वाद् या वा मद्दृष्टिदोषतः ।
मुद्रणादौ त्रुटिर्जाता संशोध्या सा महाशयैः ॥
इति ज्ञानदृशो विज्ञा विज्ञाप्यन्ते विवेकिनः ।
चौगमाग्रामवास्तव्य-श्रीसीतारामशर्मणा ॥

# अथ विषयानुक्रमणिका ।



इति विषयानुक्रमणिका ।



॥ श्रीः ॥

श्रीकेशवदैवज्ञविरचिता

# जातकपद्धतिः ।

## सोपपत्तिव्याख्योदाहरणदीपिकासहिता ।



दानवारिभिरर्च्यो य शोभितो दानवारिभिः ।
अगजानन्दनः पायादपायात् स गजाननः ॥
त्रैलोक्यभूयतुर्वर्गप्रदा ता-पापहृत् सदा ।
मिथिलाभूमिजा-माता ※ सन्तत सन्तनोतु शम् ॥
जननीं जानकीं नौमि तातं यच्छुरनाभिधम् ।
यशसा यौ भुवि ख्यातावन्ते साम्बेशतां गतौ ॥
महामहोपाध्यायो बुधवर्यो ज्यौतिषाचार्यः ।
श्रीमुरलीधरशर्मा शाश्वतधर्मानुरागिजनमान्य ।
ध्यात्वा यत्पदकमलं मन्दधियोऽपि हि भवन्ति तत्त्वज्ञाः ।
जयति तरां स गुरूणामपि गुरुरध्यापयन् काश्याम् ॥
श्रीमिथिलापतिविद्यापीठे विज्ञान् प्रपाठयन्ननिशम् ।
शं श्रीनन्दनमिश्रो दिशतु गुरुर्ज्यौतिषाचार्यः ॥
देवीमभीष्टदां नत्वा श्रियं स्वाभीष्टदेवताम् ।
उपपत्तियुतां कुर्वे व्याख्यां जातकपद्धतेः ।

अथ ग्रन्थकारो वृत्तपूर्वार्धेन मङ्गलमाचरन् ग्रन्थारम्भमुत्तरार्धेन ग्रन्थान्तरसाध्यमितिकर्तव्यतामस्तलग्नसाधनञ्चाह —

---

※ "सीता", पक्षान्तरे ' राम ।

**नत्वा विघ्नपशारदाच्युतशिवब्रह्मार्कमुख्यग्रहान्**
**कुर्वे जातकपद्धतिं स्फुटतरां होराविदां प्रीतये* ।**
**यन्त्रैः स्पष्टतरोऽत्र जन्मसमयो वेद्योऽथ खेटा. स्फुटा**
**यत्पक्षे हि घटन्त उद्गम इहास्तर्क्षं सषड्भः स च ॥१॥**

व्याख्या—'अहं' विघ्नपशारदाच्युतशिवब्रह्मार्कमुख्यग्रहान् विघ्नपो गणेशः, शारदा सरस्वती, अच्युतो विष्णुः, शिवो महादेव, ब्रह्मा विधाता, अर्कमुख्यग्रहाः सूर्यादिनवग्रहा एतान् नत्वा प्रणम्य होराविदां होरां ज्योतिश्शास्त्रस्य लग्नफलादिविनिर्णयस्कन्धं विदन्तीति होराविदस्तेषां प्रीतये मुदे स्फुटतरामतिलघुक्रियां जातकपद्धतिं जातस्य शुभाशुभफलनिरूपकं शास्त्रं जातकं तस्य पद्धतिं मार्गं कुर्वे करोमि। अत्रास्यां पद्धतौ यन्त्रैः शङ्कु-घटी-चक्रादिभिः स्पष्टतरोऽतिसूक्ष्मो जन्मसमयः सूर्योदयाज्जन्मकालावधिकेष्टकालो वेद्यो ज्ञातव्यः। अथानन्तरं इहास्मिन् जन्मसमये यत्पक्षे यस्मिन् सौरादिपक्षे घटन्ते दृग्गणितैक्यं गच्छन्ति तस्मिन् पक्षे स्फुटा स्पष्टाः खेटा ग्रहा 'साध्या' इति शेषः। उद्गमं लग्नं च साध्य स उद्गमः षड्भः षड्राशिसहितो ऽस्तर्क्षं सप्तमलग्नं भवतीत्यर्थः ॥ १ ॥

अत्रोपपत्तिः—"यानाविवाहोत्सवजातकादौ खेटैः स्फुटैरेव फलं स्फुटत्व"मित्याद्युक्तेः सूक्ष्मजन्मकाले स्फुटखेटादिसाधनं समुचितमेव। तथा क्रान्तिवृत्तक्षितिजवृत्तयोः पूर्वसम्पातः प्रथमलग्नं पश्चिमसम्पातश्चास्तलग्नसंज्ञं तत्सम्पातद्वयं च मिथः षड्भान्तरितमिति गोलीयरेखागणितेनातिरोहितमेव विदामतो लग्नं सषड्भमस्तर्क्षं स्यादेवेत्यलं पल्लवितेन ॥ १ ॥

### भाषार्थ—

दोहा—श्रीगणपतिपदपद्मयुग मन धरि सीताराम ।
सरलमनुजभाषातिलक लिखत सुजनहितकाम ॥

भा०—मैं ( केशव ) गणेश, सरस्वती, विष्णु, महादेव, ब्रह्मा, और सूर्यादि नवग्रहों को प्रणाम करके होराशास्त्र जानने वालों के प्रीत्यर्थ अत्यन्त लघुक्रियायुक्त 'जातकपद्धति' नामक ग्रन्थ बनाता हूं। यहाँ यन्त्रादि द्वारा अत्यन्त सूक्ष्म जन्म-

* बहुषु पुस्तकेषु 'ज्योतिर्विदां प्रीतये' इति पाठोऽनभिहितः प्रक्षिप्तः स न रमणीय केवलहोराविदां ज्योतिर्विदत्वाभावात् ।

समय समझना चाहिए, फिर उस जन्म समय में जिनके पक्ष से गणित करने से दृक्तुल्यता होती हो उन ( सौर, ग्राह्य आदि ) पक्ष से स्पष्टग्रह साधन करें और ग्रन्थान्तरोक्तविधि से लग्नसाधन करें और लग्न में ६ राशि जोड़ने से सप्तमलग्न अर्थात् जायाभाव होता है ॥ १ ॥

# अथोदाहरणदीपिका ।

सस्मृत्य कालिकापादाम्बुजं जातकपद्धते ।
मुदे देवविदां कुर्वे उदाहरणदीपिकाम् ॥ १ ॥

अत्र तावत्स्पष्टग्रहसाधनार्थमहर्गणस्यैव प्रयोजनं भवत्यतः कलियुगादेस्तदानयनार्थं ग्रन्थान्तरोक्तं सार्द्धकं पद्यम्—

'शाको नवाद्रीन्दुकृशानुयुक्तः कलेर्भवेदब्दगणो व्यतीतः ।
स द्व्याच्चन्द्रगणः प्रभाकरहतश्चैत्रादिमासैर्युतः
त्रिष्ठः खाद्रिहताग्नयुक्— सुरहृतैर्लब्धाधिमासैर्युतः ।
खत्रिघ्नः सतिथिर्द्विधा शिवहतत्रिव्योमशैलोद्धृतै—
र्हीनो लब्धदिनावमैः सितनिशार्द्धे सावनोऽहर्गणः ॥"

अथ शालिवाहनशकाब्दे १७८० फाल्गुनकृष्णषष्ठ्यां बुधे सूर्योदयात् ४० । ३६ इष्टघटिकादिष्वहर्गणः साध्यते । तत्रोक्तप्रकारेण शकः १७८० नवाद्रीन्दुकृशानु ३१७६ युक्तः ४९५६ अयं कलव्यतीताब्दगणः स्यात् । असौ व्यतीताब्दगणः प्रभाकर १२ हतः ५९५०८ चैत्रमारभ्य गतचन्द्रमासै१०र्युतः ५९५१८ अयं त्रिधा स्थाप्य । अन्तिमस्य खाद्रिलवेना ८५० नेन द्वितीयस्थो युतः ६०३६८ अस्य सुरलवेना १८२९ नेन प्रथमस्थानस्थो युतः ६१३४७ अयं त्रिंशद्गुणः १८४०४१० गततिथिभि २१ राभिर्युतः १८४०४३१ अयं द्विष्ठः । द्वितीयस्थः शिव ११ हतः २०२४४७४१ अस्य त्र्यधिकसप्तशतांशेना २८६९७ नेन प्रथमस्थो हीनो जातः १८११६३४ अयमेव फाल्गुनकृष्णषष्ठ्यां बुधनिशार्धे सावनाऽहर्गणो जातः । अथाहर्गणः सप्ततष्टः ६ सितादभीष्टवारो बुधः स्यात् ।

अथात्र विशेषः—अहर्गणः स्वाभीष्टवारो यदि नायाति तदाभीष्टवारार्थं सैको वा निरेकोऽहर्गणः कार्यः ।

अन्यथापि विशेषः—मलमासात् पूर्वमासेष्वहर्गणानयने पूर्ववर्षाधिमासापेक्षया यद्यधिकोधिमास आगच्छेत् तदा स न ग्राह्यः किन्तु पूर्ववर्षोत्पन्नतुल्य एवाधिमासो ग्राह्यः ।

एवं स्पष्टाधिमासोत्तरमासे अहर्गणानयने पूर्ववर्षाधिमासापेक्षया यद्यधिकोधिमासो नायाति तथापि स ग्राह्य एव।

पुनरपि विशेषः—मलमासोत्तरमहर्गणे गतचैत्रादिमासगणनाया-मधिमासो न ग्राह्यः। मध्ये त्वहर्गणानयने गततिथिग्रहणेऽधिमासस्य तिथयो गणनीया एवेति॥

अथाहर्गणाद्वल्लिकानयनं मकरन्दप्रकाशे—

"विधाय भागं द्युगणस्य षष्ट्या पुनः पुनः सा दिनजा ग्रहाणाम्।
वल्ली भवेच्छेषमिता चतुर्धा ज्ञेयास्ततो मध्यखगा ग्रहज्ञैः॥"

उदाहरणम्—अहर्गणः १८११६३४ अस्य षष्ट्यंशलब्धिः ३०१९३ शेषम् ५४ इयमेव प्रथमा वल्ली। प्रथमलब्धस्यास्य ३०१९३ पुनः षष्टिभागाल्लब्धं ५०३। शेषम् १३ इयं द्वितीया वल्ली। पुनर्द्वितीय-लब्धस्यास्य ५०३ षष्टिभागाल्लब्धम् ८। शेषम् २३ इयं तृतीया वल्ली। पुनः तृतीयलब्धस्यास्य ८ षष्ट्यंशलब्धिः ० शेषम् ८ इयमेव चतुर्थी वल्ली। आसां क्रमान्न्यासः ८। २३। १३। ५४ इति वल्लिकानयनम्।

अथ मध्यमग्रहानयनम्। अत्र यस्मिन् पक्षे ये घटन्ते तस्मिन् पक्षे ते ग्रहा साध्या इत्याचार्याणामाशयस्तथापि मकरन्दप्रकाराभि-ज्ञानां छात्राणामुपकारार्थं मकरन्दयुक्त्यैव ग्रहा साध्यन्ते। यथा मकरन्दप्रकाशे—

'यो वल्लिकायां प्रथमावशेषस्तस्मादधःस्था ग्रहचाटिकायाम्।
येऽङ्काः स्थितास्तेषु युगप्रमाणा अङ्का बुधैरादित एव ग्राह्याः॥
यदा शून्यं भवेद्वल्यान्तदा तस्य तलस्थितान्।
कदापि नैव गृह्णीयादङ्कान्मध्यप्रसाधने॥
द्वितीयशेषे प्रथमं विहाय तृतीयशेषे द्वितयं चतुर्थे।
त्रयं तु तत्तत्तलगाङ्कयागं याणैर्भजेच्छेषमितं तु षष्ट्या॥
सङ्गुण्य दिग्भिर्विभजेत्फलं यदग्रान्तरेणापि विहीनितं तत्।
मध्यो भवेदर्कमुखग्रहाणां सहायकः स्पष्टविधानयोग्यः॥"

उदाहरणम्—पूर्वानीता वल्लिका ८।२३।१३।५४ अथ रविचाटि-कायां प्रथमवल्लिकातलस्थांकाः ८।५२।१३।३१।३३ द्वितीयवल्लीतल-स्थाङ्काः ८।७।४२।२।३२ तृतीयवल्लीतलस्थाङ्काः ४१।१८।५६।५२।४७ चतुर्थवल्लीतलस्थाङ्काः ५३।३३।५२।१६।४० एषां योगः ५१।५२।४७।४३। ३२ एतस्य प्रथमस्थाने पञ्चभक्ते लब्धो राशिः १० शेषं १ षष्ट्या

६० सङ्गुण्य अग्रिमाङ्के ५२ युतं ११२ दशभिर्भक्तं लब्धं भागाः ११ शेषं २ षष्ट्या सङ्गुणितम् १२० अग्रिमाङ्के ४७ युतं १६७ पुनर्दशभिर्भक्त्वा लब्धाः कला १६ शेषं ७ षष्ट्या सङ्गुण्य ४२० अग्रिमाङ्के ४३ युत ४६३ दशभिर्भक्तं लब्धा विकलाः ४६ एषां क्रमेण न्यासः १०।११।१६।४६ अथ कलादौ मिथिलादेशान्तर१।३५मृणं कृत्वा जातो मिश्रमानकालिकमध्यमरविः १०।११।१५।११ अथ तात्कालिकार्थं पद्यम्—

"मिश्रेष्टयोर्यद्विवरं दिनाद्यं गतिसङ्गुणम्।
षष्ट्या भक्तं लवाद्यं स्यान्मिश्राधिक्ये फलं त्वृणम्॥
अल्पे ग्रहे धनं कार्यमेवं तात्कालिको भवेत्।
चक्रे तु विपरीतः स्याद्राहुकेत्वोस्तथैव हि॥"

अथ मिश्रमानम् ४४।७ इष्टम् ४०।३६ अनयोरन्तरमृण चालनदिनादि ०।३।३१ रवेर्मध्यमा गतिः ५९।८ अनया मिश्रेष्टान्तरं गुणितम् षष्ट्या विभक्तं लब्धमंशादिचालनमृणम् ००।३।२८ अनेन हीनो पूर्वानीतमिश्रमानकालिकमध्यमरविस्तात्काले मध्यमरविः। १०।११।११।४३ एव चन्द्रादयोऽपि साध्याः॥ (द्रष्टव्यम् १ चक्रम्)॥

अथ मन्दोच्चानयनपद्य मकरन्दप्रकाशे—

"नन्दा भूपा ग्रहा वेदा रसा वाणगजाः क्रमात्।
विना चन्द्रं ध्रुवाः प्रोक्ताः सूर्यादीनां नभ सदाम्॥
शशिबाणाङ्गभूतुल्यो व्यवस्थितशको मतः।
व्यवस्थितशकं स्वीयाच्छकात्संशोध्य यत्नतः॥
अन्तरं स्वध्रुवैर्भक्तं फलं यद्विकलात्मकम्।
तद्व्यवस्थितमन्दोच्चे युक्तमिष्टं तु तद्भवेत्॥"

अत्रोदाहरणम्—व्यवस्थितशकः १६५१ इष्टशकश्च १७८० अनयोरन्तरम् १२९ रविध्रुवाङ्केनाऽनेन भक्तं लब्धं १४ अनेन विकलात्मकेन व्यवस्थितरविमन्दोच्चम् २।१७।१७।९ युतम् २।१७।१७।२३ इदमिष्टरविमन्दोच्चं जातम्। एवं कुजादीनामपि। चन्द्रमन्दोच्चं तु मध्यमग्रहानयनवदेव ज्ञेयम्। (द्र० ३ चक्रम्)।

अथ रविचन्द्रयोः स्फुटीकरणपद्यम्।

"शोधयेत्स्वस्वमन्दोच्चात् स्वस्वमध्यं प्रयत्नतः।
शेषं केन्द्रं बुधैर्ज्ञेयं त्र्यधिकं तद्यदा भवेत्।
षड्भात्संशोधयेत्तत्तु षड्भाधिक्यं यदा भवेत्।

षड्भहीनं तदा कार्यं चक्राच्छोध्यं नवाधिकम् ॥
राशिघ्नः केन्द्रराशिः स्याद्भुजः स्वीयलवान्वितः ।
तदधःस्थान् लिखेदङ्कान् प्रथमं फलपत्रतः ।
भुजाग्रिमतलस्थाङ्कान् तदधो विलिखेत्क्रमात् ।
फलयोरन्तरेणैव हन्याद्भुजकलादिकम् ॥
षष्ट्यासं समृणं कुर्यात् क्रमोत्क्रमवशात्फले ।
प्रथमे तत्फलं स्पष्टं ज्ञेयं गणितकोविदैः ॥
तत्फलेन युतो मध्यः केन्द्रे मेषादिषड्भगे ।
तुलाषट्कस्थिते हीन स्पष्टखेटो भवेद्ध्रुवम् ॥"

अथ स्फुटरविसाधनार्थमुदाहरणम्—

मध्यमार्कं १०।११।११ ४३ रविमन्दोच्चा २।१७।१७।२३ दस्माविशोध्य ४।६।५।४० शेषमिदं केन्द्रसंज्ञम् । इदं राशित्रयाधिकत्वात् षड्भाद्विशोध्य शेषं भुजः, १।२३।५४।२० एतस्य राशिस्त्रिघ्नः ३० स्वलवै-२३ रेभिर्युतः जाता भुजांशाः ५३ एतत्तलस्थाः फलपत्राङ्काः १।४४।४५ तदग्रिमतलस्थाङ्काश्च १।४६।२ एषामन्तर जातं फलान्तरम् ०।१।१७ अनेन भुजकलादिकं ५४।२० गोमूत्रिकया सङ्गुण्य षष्ट्या विभज्य लब्धं ००।०१।१० इदं प्रथमफले १।४४। ४५ युक्तम् जातमिष्टफलम् १।४५।५५ अनेन मेषादि—केन्द्रत्वाद्युक्तो मध्यमरवि स्फुटरविः १०।१२।५७।३८ एवं चन्द्रानयनमपि ॥

अथ स्पष्टगतिसाधनार्थं पद्यम्—

"गोमूत्रिकायाः क्रमतो हि गुण्या मध्यागतिः स्वस्वफलान्तरेण ।
षष्ट्युद्धृता लब्धयुता स्वकेन्द्रे कर्कादिषड्राशिगते सभुक्तिः ॥
मृगादिषड्राशिगते च केन्द्रे लब्धेन हीना निजमध्यभुक्तिः ।
स्फुटा भवेद्भुक्तिरिहेन्दुरव्योरेवं गतिर्ज्ञैरुदिता महद्भिः ॥

अत्रोदाहरणम्— रवेर्मध्यगतिम् ५९। ८ फलान्तरेणा००।०१।१७ नेन गोमूत्रिकया संगुण्य षष्ट्या विभज्य लब्धम् १।१६ अनेन मेषादिकेन्द्रत्वान्मध्यगतिः ५९।८ युक्ता जाता रवेः स्पष्टा गतिः। ६०।२४ एवं चन्द्रस्यापि ॥

अथ कुजादीनां स्फुटीकरणश्लोकाः—

"सूर्य्यस्य मध्यं बुधशुक्रयोः स्यान्मध्यं स्वमध्यं निजशीघ्रतुङ्गम् ।
सुरेज्यभौमार्किनभश्चराणां मध्यं स्वमध्यं रविमध्यमुच्चम् ॥

अपास्य मध्यं निजशीघ्रतुंगाच्छेषं भवेद्राशिमुखं स्वकेन्द्रम्।
षड्भाधिकं चीदय कुजादिकानां संशोधयेद् द्वादशराशिमध्ये॥
खत्रिघ्नः केन्द्रराशिः स्याद्भुजः स्वीयलवान्वितः।
तद्वसात्पूर्ववच्छैघ्र्यं फलमादौ प्रसाधयेत्॥
तदर्धं स्वमृणं कुर्य्यात् केन्द्रे मेषतुलादिगे।
परग्रहो भवेदेवं मन्दोच्चात्तं विशोधयेत्॥
शेषं द्वितीयकेन्द्रं स्यादतो बाहुश्च पूर्ववत्।
तद्वसात्पूर्ववन्मान्दं फलं ज्ञात्वा तु तद्ग्रहे॥
मध्याख्ये स्वमृणं कुर्य्यात् समस्तं द्विग्रहो भवेत्।
द्विग्रहं शोधयेच्छीघ्राच्छेषं केन्द्रं तृतीयकम्॥
केन्द्राद्वाहुस्ततः शैघ्र्यं पुनः संसाधयेत्फलम्।
समस्तं स्वमृणं कुर्य्यात् द्विग्रहे तत्फलं क्रमात्॥
केन्द्रे मेषतुलाषट्के भवेदेव स्फुटो ग्रहः।
एवं कुजादिपञ्चानामुदितं स्पष्टसाधनम्॥"

अत्रोदाहरणम् — रविमध्यमानयनवदत्र साधितमध्यमभौमः ००।११। १६।४३ अस्य शीघ्रोच्चं मध्यमार्कः १०।११।११।४३ मध्यमार्का-न्मध्यमं कुज विशोध्य जातं प्रथमशीघ्रकेन्द्रसंज्ञं ९।२९।५५।०० इद षड्भाधिकत्वाच्चक्राद्विशोधित २।००।०५।०० एतस्य भुजांशाः ६० एत-दधःफलपत्रस्थशीघ्रफलाङ्का २२।५४ भुजांशाग्रिमाङ्कस्यास्य ६१ तल-स्थिताङ्काः २३।१५ अनयोरन्तरम् ००।२१ अनेन भुजकलादिकं ५।०० गोमूत्रिकया गुणितं ००।१०५।०० षष्ट्या भक्तं लब्धं ००।१।४५ इदं प्रथमफले २२।५४ युतं जातम् २२।५५।४५ एतस्यार्धेन ११।२७।५२ मध्यमकुजस्तुलादिकेन्द्रत्वाद्धीनः कृतः ११।२९।४८।५१ अयमेव पर-ग्रहाख्यो ज्ञेयः। एनं परग्रहं कुजमन्दोच्चा ४।१०।०२।४० दस्माद्विशोध्य जातं मन्दकेन्द्रम् ४।१०।१३।४९ अस्मात् प्राग्वद्भुजांशाः १२० पूर्ववद् गृहीते मान्दफले ९।२६ ॥ ९।१९ अनयोरन्तरम् ००।०७ अनेन भुजक-लादिकं १३।४९ गोमूत्रिकया संगुण्य जातम् १।३६।४३ षष्ट्या भक्तं लब्धं ००।०१।३७ प्रथममान्दफले ९।२६ ऽस्मिन् क्षयफलत्वाद्धीनं ९।२४।२३ अनेनापि मेषादिमान्दकेन्द्रत्वात् मध्यकुजोऽत्रादौ युतः ००।२०।४१।०६ अयमेव द्विग्रहाख्यः स्यात्। एनं द्विग्रहं रविमध्या-द्विशोध्य जातं तृतीयं शीघ्रकेन्द्रम् ९।२०।३०।३७ इदं षड्भाधिकमतः

१२ अस्माद्विशोधितम् २।०६।२६।२३ एतस्य राशिस्त्रिंशद्गुणितः ६० अंशैः ६ युत जाता भुजांशाः ६६ अस्मात्पूर्ववच्छीघ्रफले २६।४ ॥ २६।२४ अनयोरन्तरेना ००।२० नेन गोमूत्रिकया गुणितं भुजफलादिकं ८।४७।४० षष्ट्या भक्तं लब्धम् ००।०८।४८ अनेन प्रथममन्दफलं युक्तं जातं २६।१३।४८ अनेनैव तुलादिकेन्द्रत्वाद्धीनो द्विग्रहो जातः स्फुटकुजः ११।२४।२७।१८ एवमेव बुधादिकानयनमपि ज्ञेयमिति।

अथ कुजादिकानां गतिस्पष्टीकरणम्। तत्र तावन्मध्यमागतिस्तु प्रथमचक्रे द्रष्टव्या। गतिस्फुटीकरणपद्यम्—मकरन्दप्रकाशे—

"मध्यां गतिं मन्दफलान्तरेण हत्वा हरेदभ्ररसैरिहाप्तम्।
मध्ये स्वकेन्द्रे किलराशिषट्के कर्कान्मृगान्मध्यगतौ धनर्णम्॥
मन्दस्फुटा सा च तयोनिता स्याच्छीघ्रा गतिः केन्द्रगतिर्ग्रहाणाम्।
हत्वाथ तां शीघ्रफलान्तरेण षष्ट्या भजेदाप्तफलं धनर्णम्॥
मन्दस्फुटायां निजशीघ्रकेन्द्रे मृगादिकर्कादिगते द्वितीये।
भवेत्तदा भूमिजपूर्वकानां गतिः स्फुटा सैव नभश्चराणाम्॥"

अत्रोदाहरणम्—कुजस्य मध्यमागतिः ३१।२६ मन्दफलान्तरेणा ००।०७ नेन गोमूत्रिकया गुणिता जाता ००।२१।७१।८२ षष्ट्या भक्ता लब्धं ००।०३।४० इद कर्कादिकेन्द्रत्वान्मध्यगतौ धनं कार्य्यमतः ००।३५।०६ इयमंशादिमन्दस्फुटा गतिः, अनया शीघ्रागतिः ५६।८ हीना फलादिः २४।०२ केन्द्रगतिः स्यात्, सा च शीघ्रफलान्तरेणा ००।२० नेन गुणिता ००।४८०।४० षष्ट्या भक्ता लब्धं ००।०८।०१ अनेन मृगादिकेन्द्रत्वान्मन्दस्फुटा गति ०० ३५।०६ युता जाता कुजस्पष्टागतिः ००।४३।०७॥ एवं बुधादीनामपि गतयः साध्याः (द्र० ४ चक्रम्)

अथायनांशानयनपद्यम्—

"शाकमेकाब्धिवेदोनं द्विःस्थं दशभिर्हरेत्।
लब्धं हीनञ्च तत्रैव षष्ट्याप्ता अयनांशकाः॥
लवीकृतोऽर्कस्त्रिगुणो नगाप्तस्तावन्मिताभिर्विकलाभिराढ्याः।

अत्रोदाहरणम्—शकः १७८० एकाब्धिवेदै ४२१ रेभिर्हीनः १३५६ अयं स्थानद्वये स्थाप्य द्वितीयस्थो दशभिर्भक्तः १३५।५४ अनेन प्रथमस्थानस्थो हीनः १२२३।०६ षष्ट्या भक्तो लब्धं २०।२३।०६ वर्षारम्भेऽयनांशकाः। अथ लवीकृतः सूर्य्य. ३१२।५७।२८ त्रिभिर्गुणितः

६३८।५२।५४ विंशत्या भक्तो लब्धं ४७ आभिर्विकलाभिर्वर्षारम्भका-
लिकायनांशा युताः जाता इष्टायनांशाः २०।२३।५३।

अथ लङ्कोदयेभ्यः स्वदेशोदयानयनपद्यम्—
मेषादिगे सायनभागसूर्ये दिनार्धजाभा पलभा भवेत्सा।
त्रिष्ठा हता स्युर्दशभिर्भुजङ्गैर्दिग्भिश्चरार्धानि गुणोद्धृतान्त्या॥
लङ्कोदया विघटिका गजभानि गोऽङ्क-
दस्त्रास्त्रिपक्षदहनाः क्रमगोत्क्रमस्थाः।
हीनान्विताश्चरदलैः क्रमगोत्क्रमस्थै-
र्मेषादितो घटत उत्क्रमतस्त्विमे स्युः॥

मिथिलादेशीयपलभा ६ अत उपरोक्तपद्यानुसारेण चरखण्डानि
६०॥४८॥२०

| | लंकोदयाः | चर | | स्वोदयाः |
|---|---|---|---|---|
| मी. मे. | २७८ | —६० | = | २१८ |
| कु. वृ. | २९९ | —४८ | = | २५१ |
| म. मि. | ३२३ | —२० | = | ३०३ |
| ध. क. | ३२३ | +२० | = | ३४३ |
| वृ. सिं. | २९९ | +४८ | = | ३४७ |
| तु. क. | २७८ | +६० | = | ३३८ |

अतएव वृद्धोक्तं पद्यम्—
"अष्टेन्दुपक्षाः शशिबाणपक्षा गुणाभ्रदामा गुणवेदरामा।
शैलाब्धिरामा वसुरामरामाः क्रमोत्क्रमान्मेषतुलादिमानम्॥"

अथ लग्नानयनपद्यम् नीलकण्ठ्याम्—
तात्काले सायनार्कस्य भुक्तभोग्यांशसंगुणात्।
स्वोदयात् खाग्निहृल्लब्धं भुक्तं भोग्यं रवेस्त्यजेत्॥
इष्टनाडीपलेभ्यश्च गतगम्यान्निजोदयान्।
शेषं खत्र्याहृतं भक्तमशुद्धेन लवादिकम्॥
अशुद्धशुद्धभे हीनयुक् तनुर्व्ययनांशकम्।

अथ कदा कथं लग्नं साध्यं तदर्थं पद्यम्—
"लग्नं सूर्योदयादिष्टदण्डैर्भोग्यप्रकारतः।
रात्रिशेषघटीभिस्तु साध्यं भुक्तप्रकारतः॥
यामिनीगतदण्डैर्वा लग्नं षड्भयुताद्रवेः।

भोग्यप्रकारतस्त्वेवं दिनशेषसमुद्भवैः ॥
दण्डैः सषड्भरवितः साध्यं भुक्तप्रकारतः ।
क्रियालाघवमेवं स्याज्ज्ञेयं गोलविदा सदा ॥"

अत्रोदाहरणम्—अथ सूर्योदयादिष्टघट्यः ४०।३६ अत्र लाघवार्थं रात्रिगतेष्टघटीभिः १३।२४ राभिः सषड्भसूर्याद्भोग्यप्रकारेण लग्नं साध्यते । स्पष्टो रविः १०।१२।५७।३८ अयनांशाः २०।२३।५३ सषड्भसायनः सूर्यः ५।०३।२१।३१ अस्य भुक्तांशाः ३।२१।३१ त्रिंशदंशेभ्यः ३० शोधिता जाताः सूर्यस्य भोग्यांशाः २६।३८।२९ अथ सषड्भसायनार्कस्य कन्याराशिगतत्वात् पूर्वानीतैर्भोग्यांशैः कन्योदयो ३३८ गुणितः ९००४।४७।२२ खाग्न्यु ३० द्धृतो जातो भोग्यकालः पलादिः ३००।०९।३५ एवं भुक्तांशैः भुक्तकालो भवति । अथेष्टघटीपलेभ्यो ७४२ भोग्यकालः ३००।०९।३५ शोधितः शेषम् ४४१।५०।२५ अस्मात्तुलोदयः ३३८ शोधितः शेषम् १०३ । ५० । २५ तुलादग्रे, वृश्चिकोदयमान ३४७ मिदं न शुद्ध्यत्यतस्तुलः शुद्धसंज्ञो वृश्चिकोऽशुद्धसंज्ञश्च ज्ञेयः । शेषं १०३।५०।२५ खत्र्याहतं ३११५।१२।३० अशुद्धोदयमानेनानेन ३४७ भक्तं लब्धमंशाद्यम् ८।५८।३६ मेषादिशुद्धपर्यन्तं राशिसंख्या ७ अस्यां लब्धांशाद्ये योजिते जातम् ७।८।५८।३६ इदमयनांशै २०।२३।५३ र्हीनं जातं प्रथमलग्नम् ६।१८।३४।४६ इदं सषड्भं सप्तमलग्नं ०।१८।३४।४६ ॥ लग्नसाधने विशेषः —

"इष्टाधिकानि सूर्यस्य भुक्तभोग्यपलानि चेत् ।
तदेष्टात् त्रिंशता निघ्नात् सूर्याक्रान्तोदयैर्हृतात् ॥
लब्धांशै रहितो युक्तो रविरेव हि लग्नकम् ।
उदये रवितुल्यं स्याल्लग्नं षड्भयुतो रविः ॥
अस्तकाले भवेदेव ज्ञेयं तत्त्वविदा सदा ॥ १ ॥"

---

अथ नतोन्नत दशमचतुर्थभावसाधनमाह —

रात्रेः शेषमितं युतं दिनदलेनाह्नो गतं शेषकं
विश्लेष्यं खलु पूर्वपश्चिमनतं त्रिंशच्च्युतं चोन्नतम् ।
यत्पूर्वोन्नतषड्भयुक्तरवितः पश्चान्नतादित्यतो
लङ्कोदयकैश्च लग्नमिव तन्माध्यं सषड्भं सुखम् ॥२॥

व्या०—रात्रेः शेषं (अवशिष्टघट्यादिकं), इतं गतघट्यादिकं दिनदलेन दिनार्धेन युतं क्रमेण पूर्वपश्चिमनतं भवति, (अर्थात् रात्र्युत्तरार्धे जन्मसमयश्चेत्तदा रात्रिशेषं दिनार्धेन युतं पूर्वनतं तथा रात्रिपूर्वार्धे जन्मसमयश्चेत् तदा रात्रिगतं दिनदलेन युतं पश्चिमनत भवति) एवं अह्नो दिनस्य गतं शेषकं दिनदलेन विश्लेष्य (दिनार्धाद् विशोध्यमित्यर्थः) तदा क्रमेण पूर्वपश्चिमनतं स्यात्। तन्नत त्रिंशच्च्युतं त्रिंशतः शुद्धमुन्नतं स्यात् (पूर्वनते त्रिंशच्च्युते पूर्वोन्नतं, पश्चिमनते त्रिंशच्च्युते पश्चिमोन्नतं स्यादित्यर्थः)। अथ भावद्वयानयनं--यदित्यादि। पूर्वोन्नतपड्भयुकरवितः पूर्वोन्नतघटिकासषड्भसूर्याभ्यामित्यर्थः, तथा पश्चान्नतादित्यत पश्चिमनतकालतत्काल-सूर्याभ्यामित्यर्थः। लङ्कोदयकैर्लङ्काराश्युदयैः "लङ्कोदया विघटिका गजभानो" इत्यादिभिः लग्नमिव यल्लग्नं तन्माध्यं दशमलग्नं स्यात् (अर्थात् पूर्वनते सति पूर्वोन्नतघटिकाद्यमिष्टकालं प्रकल्प्य, सषड्भसायनसूर्यं तात्कालिकसायनसूर्यं प्रकल्प्य, लङ्कोदयानेव स्वोदयान् प्रकल्प्य भोग्यप्रकारेण लग्नं साध्यं तद्दशमलग्नं स्यात्, एवं पश्चिम नते पश्चिमनतघटिकादिकमिष्टकालं, लङ्कोदयान् स्वोदयान् प्रकल्प्य तात्कालिकसायनसूर्यस्य भोग्यांशवशेन लग्नं साध्यं तद्दशमं भवतीत्यर्थः) तत् सषड्भं सुखं चतुर्थलग्नं भवतीति ॥ २ ॥

अथ नतोन्नतोपपत्तिः- याम्योत्तरवृत्तेन खण्डितस्य खगोलस्य प्रागपरविभागेन कपालद्वयं भवति। तत्र याम्योत्तराहोरात्रवृत्तोर्ध्वसम्पातादहोरात्रवृत्ते सूर्यो यावतीभिर्घटीभिर्नतः स नतकालः। तथा याम्योत्तराहोरात्रवृत्ताधःसम्पाताद्यावतीभिर्घटीभिरुन्नतः स चोन्नत कालः, ऊर्ध्वयाम्योत्तरवृत्तात्क्षितिजावध्यहोरात्रवृत्ते दिनार्धं, ततश्चाधोयाम्योत्तरवृत्तावधि रात्रिदलम्। अतः प्राक्कपाले क्षितिजाधःस्थे सूर्ये रात्रिशेषं, पश्चिमकपाले क्षितिजाधःस्थे रात्रिगतमतो रात्रिशेषेण रात्रिगतेन पृथक् युतं दिनदलं क्रमेण पूर्वपश्चिमनतं स्यादेव। तथा प्राक्कपाले क्षितिजोर्ध्वस्थे रवौ कुजादूर्ध्वं यावद् दिनगत, पश्चिमकपाले दिनशेषमतो दिनगतेन दिनशेषेणोनितं दिनदलं क्रमात् प्रागपरसंज्ञको नतकालः स्यात्। तथा नत + उन्नत = ३० ∴ उन्नत = ३० - नत। ∴ उपपन्नम् नतोन्नतानयनम्। अथ दशमचतुर्थभावोपपत्तिः—क्रान्तिवृत्तयाम्योत्तरवृत्तयोरूर्ध्वसम्पातो दशमलग्नमधःसम्पातश्च चतुर्थलग्नं "मध्यलग्न

मिति दक्षिणोत्तरे" इति भास्करोक्तेः। तदानयनं तु क्रियालाघवाद् भोग्यप्रकारेणैवाचार्येण कृतम्। यथा—पूर्वनते यावतीभिर्घटीभिर्याम्योत्तरवृत्ताद्रविरुन्नतस्तावतीभिरेव घटीभिः सषड्भरविरूर्ध्वयाम्योत्तरवृत्तान्नतो वृत्तयोः सम्पातद्वयस्य षड्भान्तरितत्वात्। अतः सषड्भसूर्यदशमलग्नयोरन्तरे सषड्भसूर्यस्य भोग्यांशाः मध्यलग्नस्य भुक्तांशाः तदन्तर्वर्तिराशयश्च, तत्सम्बन्धिकालश्चाहोरात्रवृत्ते पूर्वोन्नतघटीतुल्य एव पूर्वोक्तयुक्त्या सिद्धोऽत एव "पूर्वोन्नतषड्भयुक्तरवित" इत्युक्तं युक्तमेव। तथा पश्चिमनते मध्यलग्नार्कयोरन्तरे रवेर्भोग्यांशाः, खलग्नभुक्तांशाः, तदन्तर्वर्तिराश्यंशाश्चेति तत्सम्बन्धिकालश्चाहोरात्रवृत्ते नतकाल एवातोऽत्र स्थितिद्वयेऽपि भोग्ययुक्त्या दशमलग्नं भवितुमर्हति। तथा याम्योत्तरवृत्तं निरक्षदेशीयक्षितिजं ध्रुवस्थानगतत्वात्, तस्मान्मध्यलग्नसाधने निरक्षोदयमानग्रहणमेव समुचितम्। तथा च दशमचतुर्थलग्नयोर्मिथः षड्भान्तरितत्वान्मध्यं सषड्भं सुखं स्यादेवेत्युपपन्नम्॥ २॥

भा०—रात्रि में मध्यरात्रि से ऊपर इष्टकाल हो तो रात्रिशेष घटी को दिनार्ध में जोड़ने से पूर्वनत होता है, यदि मध्यरात्रि से पूर्व ( पहले ही ) इष्टकाल हो तो रात्रिगतघटी को दिनदल में जोड़ने से पश्चिमनत होता है। तथा दिन में मध्याह्न से पूर्व इष्टकाल हो तो दिनगतघटी को दिनार्ध में घटाने से पूर्वनत, यदि मध्याह्न से ऊपर इष्टकाल हो तो दिनशेष घटी को दिनार्ध में घटाने से पश्चिमनत होता है। और पूर्वनत को ३० तीस में घटाने से पूर्वोन्नत तथा पश्चिमनत को ३० में घटाने से पश्चिमोन्नत होता है। इस प्रकार से यदि पूर्वनत हो तो पूर्वोन्नतघटी को इष्टकाल कल्पना करें और सायनसूर्य में ६ राशि जोड़ करके सायनसूर्य कल्पना करें, तथा पश्चिमनत हो तो पश्चिमनतघटी को इष्टकाल कल्पना करें और तात्कालिक सायनसूर्य को सायनसूर्य, तथा लङ्कोदयमान को स्वोदयमान मानकर ( दोनों संस्था में ) भोग्य प्रकार से ही लग्नसाधन करें तो दशमलग्न होता है। उसमें ६ राशि जोड़ने से सुखभाव ( चतुर्थलग्न ) होता है॥ २॥

उ० टी०—अथ नतोन्नतसाधनम्-इष्टं ४०।३६ दिनमानेन २८।२५ नेन हीनितं जातं रात्रिगतेष्टदण्डमानम् १२।२२ इदं दिनार्धेन १४।७ नेन युतं जातं रात्रौ पश्चिमनतम् २६।२९ इदं ३० त्रिंशच्च्युतं जातमुन्नतम् ३।३१॥

अथ दशमलग्नसाधनम्—

तत्र क्रियालाघवार्थं उन्नतघटीषड्भयुक्तरवितः भुक्तप्रकारेणोदा·

हरण प्रदर्श्यते। तात्कालिकोऽर्क १०।१२।५७।३८ अयनांशा २०।२३।५३ सायनार्क ११।०३।२१।३१ लपड्म ५।३।२१।३१ अस्य भुक्तांशा ३।२१।३१ एभि कन्योदयामान २७८ गुणितम् ६३३।४१।३८ खाग्न्युधृतम् जातानि भुक्तपलानि ३१।७।२३, उन्नतपलभ्य २११ सशोध्य शेष १७६।५२।३७ असात् सिंहोदयो न शुद्ध्यत्यत सोऽशुद्धसञ्ज्ञ। शेषम् १७६।५२।३७ त्रिंशता गुणितम् ५३६६।१८।३० अशुद्धलङ्कोदयमानेना २६६ नेन भक्त लब्धमंशाद्यम् १८।२५२ मपादशुद्धराशिभ्यो ५ लब्धा शाद्य शोधित जातम् ४।११।५७।८ इदमपि २०।२३।५३ रयनभागै र्हीन जात दशमलग्नम् ३।२१।३३।१५ एतद्राशिषट्केन युत जात चतुर्थलग्नम् ९।२१।३३।१५ ॥ २ ॥

अथावशिष्टभावसन्ध्यानयन तत्फल चाह—

**त्र्यंशो व्यस्तखभस्य भूयमहतो योज्यस्तनौ द्विच्युतो**
**धन्यौ तेऽपि च साङ्गभास्तनुमुखाः सन्धिर्द्वियोगोऽर्धितः।**
**शून्य सन्धिषु भावगेऽखिलफल स्याद्भावसन्ध्यन्तरे-**
**णास सन्धिखगान्तर चयचय भावाधिकेऽल्पे खगे ॥३॥**

व्याख्या—व्यस्तखभस्य सप्तमभावोनदशमलग्नस्य त्र्यंशस्त्रृती याश द्विष्ठ भूयमहत एकत्रैकेनान्यत्र द्वाभ्या गुणित इत्यथ पृथक २ स तनौ लग्ने योज्यस्तदा क्रमेण द्वितियतृतीयभावौ भवत। तथ स एव त्र्यंशो द्विच्युतो द्वाभ्या शुद्धा भूयमहता धन्यौ चतुर्थभावे योज्यस्तदा क्रमेण पञ्चमषष्ठभावो भवत। तेऽपि चानन्तरानीता द्वितीय तृतीय पञ्चम षष्ठभावा साङ्गभा षड्राशिसहिता क्रमेण एमनवमैकादशद्वादशभावा भवन्ति, एव तनुमुखास्त्वादयो द्वादश भावा सिद्धा। अथ सन्ध्यानयन द्वियोगोऽर्धिता द्वयोरासन्न सभावयोर्योगोऽर्धित सन्धिर्भवति स एव पूर्वभावस्य विराम सन्धिरग्रिमभावस्यारम्भसन्धि स्यादित्यर्थ। (अत्र विशेष भाव द्वययोगे द्वादशाधिकत्वेऽपि चक्रत्यागो न कार्य। तथा च पूर्वभाव यदि दशैकादश वा राशयोऽग्रिमभाव शून्यमेको वा राशिस्तदा शून्यैक स्थाने द्वादश सयोज्य योग कार्य।) अथ भावफलम्—सन्धिषु स्थिते ग्रहे शून्य शून्यफल, भावगे भावराश्यंशादिभिस्तुल्य ग्रहेऽखि लफल पूर्णफल रूपमितं स्यात्। भावाधिकेऽल्पे खगे सति सन्धि खगान्तर भावसन्ध्यन्तरेणाप्त फल क्रमात् चयचय भवति, (भावाधिक

ग्रहे विरामसन्धिखगान्तरं विरामसन्धिभावान्तरेण भक्तं फलं क्षयमवरोहाख्यं, भावाल्पे खगे आरम्भसन्धिग्रहान्तरमारम्भसन्धिभावान्तरेण भक्तं फलं चयमारोहाख्यं भवतीत्यर्थः ॥ ३ ॥

अत्रोपपत्तिः - प्रथमचतुर्थलग्नान्तरस्य तुल्यास्त्रयो विभागाः क्रान्तिवृत्ते द्वितीयादयस्त्रयो भावाः। तथा चतुर्थसप्तमान्तरस्य समास्त्रयो भागाः पञ्चमादयस्त्रयो भावाः, एवं सप्तमदशमान्तरेऽष्टमादयस्त्रयः, दशमप्रथमलग्नान्तरे चैकादशादयस्त्रयो भावाः प्राचीनैरुदिताः। अत एव लग्नचतुर्थान्तरस्य त्रिभागेन $= \frac{च - ल}{३} = \frac{६ + च - ल - ६}{३} = \frac{६ + च - (६ + ल)}{३} = \frac{दशम - सप्तम}{३}$ अनेनैकगुणितेन युतं लग्नं द्वितीयो भावो द्विगुणेन युतं तृतीयो भावः स्यादेव। तथा चतुर्थसप्तमान्तरत्र्यंशेन $= \frac{स - च}{३} = \frac{६ - ६ + स - च}{३} = \frac{६ - (च + ६ - स)}{३} = २ - \frac{(द\ स)}{३}$ अनेनैकगुणेन युतो बन्धुभावः पञ्चमो भावो भवितुमर्हति, द्विगुणेन युतस्तदा षष्ठभावः स्यादेव। तथा वृत्तसम्पातद्वयस्य षड्भान्तरितत्वात् द्वितीयादयोऽपि साङ्कभा अष्टमादयः स्युः। भावद्वयान्तरस्य मध्यस्थानमेव सन्धिः तस्य राश्यादिमानं $=$ प्रभा $+ \frac{द्विभा - प्रभा}{२} = \frac{प्रभा + द्विभा}{२}$ अतः "सन्धिर्द्वियोगोऽर्धित इत्यन्तमुपपन्नम्। अथ भावफलयुक्तिः—तत्र प्राचीनवचनम्—

> "भावप्रवृत्तौ हि फलप्रवृत्तिः पूर्णं फलं भावसमांशकेषु।
> ह्रासः क्रमाद्भावविरामकाले फलस्य नाशः कथितो मुनीन्द्रैः॥"

आरम्भसन्ध्यग्रतो भावप्रवृत्तिस्तत एव फलप्रवृत्तिरपि ततः क्रमेणोपचीयमानं फलं भावसमे ग्रहे सति परमं रूपमितं भवति, तत्र सन्धिग्रहान्तरमपि परमं भावसन्ध्यन्तरतुल्यं भवति, ततः क्रमेण फलस्यापचयः विरामसन्धिसमे ग्रहे फलस्य नाशस्तत्र सन्धिखगान्तरमपि शून्यमतः सन्धिखगान्तरवशेनैव फलस्योपचयापचयौ सिद्धावतोऽनुपातो यदि भावसन्ध्यन्तरतुल्यसन्धिखगान्तरेण परमं फलं रूपमितं १ लभ्यते तदेष्टसन्धिखगान्तरेण किमिति $\frac{१ \times (सं \backsim ग्र)}{भा \backsim स} = \frac{स \backsim ग्र}{भा \backsim स}$ इत्यत्राने भावफलमित्युपपन्नम् सर्वम् ॥३॥

भा०—दशमभावमें सप्तमभावको घटाकर उसका तृतीयांश लग्नमें जोड़नेसे द्वितीयभाव, और द्विगुणिततृतीयांश जोड़नेसे तृतीयभाव होता है, और उसी तृतीयांशको दो राशि २ में घटाकर शेषको चतुर्थभावमें जोड़नेसे पञ्चमभाव, और द्विगुणित शेषको चतुर्थ भावमें जोड़नेसे षष्ठभाव होता है। इस प्रकार २, ३, ५, ६, ये चार भाव हुए इनमें प्रत्येकमे ६ राशि जोड़नेसे क्रमसे ८, ९, ११, १२ ये चार भाव होते हैं, और चार भाव १, ४, ७, १० पूर्व श्लोकसे सिद्ध हो चुके हैं एवं तन्वादि द्वादशभाव सिद्ध हुए। आसन्नस्य दो दो भावों का योगार्ध करनेसे प्रथमभावकी विराम सन्धि और अग्रिमभावकी आरम्भसन्धि होती है। सन्धिके तुल्य ग्रहके रादयंशकला हो तो भाव फल शून्य, और भावके तुल्य हो तो सम्पूर्ण फल १ होता है। यदि भाव से अधिक (आगे) ग्रह हो तो विरामसन्धि ग्रहान्तरको विरामसन्धिभावान्तरसे भाग देनेसे लब्धि भावफल क्षय (अवरोही संज्ञक) होता है। यदि भावसे अल्प (पीछे) ग्रह हो तो आरम्भ सन्धिग्रहान्तरको आरम्भ सन्धि और भावके अन्तरसे भाग देनेसे लब्धि चय ( आरोही संज्ञक ) होता है ॥ ३ ॥

उ० दी०—व्यस्तखभस्यास्य ३।२।१८।२६ त्र्यंशः १।००।५६।२६ अत्र शेषम् २ अतः स्थानद्वयेऽपि सरूपोन्तिमावयवो ग्राह्योतः १।००।५६।३० अयं स्थानद्वये स्थाप्यः। एकत्रैकेन गुणितः १।००।५६।३० लग्नेना ६।१८।३४।४६ नेन युतो जातो द्वितीयभावः ७।१६।३४।१६। अन्यत्र द्वाभ्यां हतः २।१।५६।०० लग्नेना ६।१८।३४।३६ नेन युक्तो जातस्तृतीयो भावः ८।२०।३३।४६। अथ द्वाभ्यां २ व्यस्तखभस्य त्र्यंशः १।००।५६।३० शोधितः ००।२६।००।३० एकगुणेनानेन ००।२६।००।३० युक्तः सुखभावः ६।२१।३३।१५ जातः सुतभावः १०।२०।३३।४५ द्विगुणेना १।२८। १।०० नेन सुखभावो ६।२१।३३।१५ युक्तो जातो रिपुभावः ११।१६।३४।१५। सिद्धा इमे षड्भावाः भार्धयुक्ता अपरेऽपि षड्भावाः स्युरेवं द्वादश भावाः सिद्ध्यन्ति। द्र० ७ चक्रम्।

अथ सन्ध्यानयनोदाहरणम्—तनुभावः ६।१८।३४।४६, धनभावः ७। १६। ३४। १६ अनयोर्योगः १४।८।६।२। अर्धितः ७।४।४।३१ अयं तनुभावस्य विरामसन्धिर्धनभावस्यारम्भसन्धिः। एवमग्रेऽपि। द्र० ७ चक्रम्।

भावकुण्डलीनिर्णयार्थं द्रष्टव्यम् ८ ६ चक्राधःस्थितगद्यम्। तथा ८-६ चक्रे च।

अथ रूपात्मकभावफलोदाहरणम् रविः १०।१२।५७।३८ सुतभावस्यारम्भसन्धिः १०।६।३।३० अनयोरन्तरम् ००।६।५४।८ इदं षष्ट्या

सवर्णितम् २४८४८ ॥ अथ सुतभावः १०।२०।३३।४५ अस्यारम्भसन्धिः १०।६।३।२० अनयोश्चान्तरम् ००।१४।३०।१५ षष्ट्या सवर्णितम् ५२२१५ अनेन ग्रहसन्ध्यन्तरेण २४८४८ इदं भक्तं लब्धम् ००।२८।३३।६ इदं रूपात्मकभावफलम् । अस्यैव त्र्यंशः ८।३१।३ विंशोपारमकं भावफलम् । एवमग्रेऽपि । द्रष्टव्ये १०—११ चक्रे । इति ॥

अथ दृष्टिसधनमाह—

खैकाग्निद्विखवेदरामयमभूखाग्नाग्नमेकादिभे
द्रष्टा वर्जितदश्यकस्य गुरुणा चेदष्टवेदे कृताः ।
मन्देनाङ्कयमेऽसृजा नगगुणेऽङ्का भादिजाः संस्कृता
भागघ्नत्त्यवृद्धिखानललवेनाभ्युद्धृता दृग् भवेत् ॥४॥

व्या०—यः पश्यति स द्रष्टा । यो दर्शनार्हः स दृश्यः दृश्य एव दृश्यकः । द्रष्टा वर्जितदृश्यकस्य द्रष्टोनितस्य दृश्यस्यैकादिभे शेषे सति क्रमेण खैकाग्निद्विखवेदरामयमभूखाग्नाग्नं भादिजा. राशिसम्बन्धिनोऽङ्का दृष्टिध्रुवाङ्का भवन्ति । अथ गुरुशनिकुजानां विशेषमाह—चेद् गुरुर्द्रष्टा तदा गुरुणा वर्जितदृश्यकस्याष्टवेदे अष्टमे चतुर्भे च कृताश्चत्वारो दृष्टिध्रुवांका ग्राह्याः । मन्देन शनैश्चरेण वर्जितस्यांकयमे (९।२) नवमे द्विभे च शेषे कृताश्चत्वार एव । तथाऽसृजा मंगलेन वर्जितस्य नगगुणे (७।३) सप्तमे त्रिभे शेषे कृताश्चत्वार एवांका भवन्ति । अन्यांकभे शेषे तु यथाक्रमं पूर्वोक्ता एवांका भवन्तीत्यर्थः । ते भादिजा अंकाः भागघ्नत्त्यवृद्धिखानललवेन संस्कृताः ( यो भादिजोऽङ्कस्तस्मादग्रिमांशोऽल्पश्चेत्तदा तयोरन्तरं क्षयः, यद्यग्रिमांकोऽधिकस्तदा तदन्तरं वृद्धिर्भवति अतः शेषस्यांशादिगुणितक्षयवृद्धिस्त्रिंशांशेन क्रमादूनयुताः ) ते चाभ्युद्धृताश्चतुर्भक्तास्तदा दृग् दृष्टिर्भवेत् ॥ ४ ॥

अत्रोपपत्तिः—'त्र्याशं त्रिकोणं चतुरस्रमस्तं पश्यन्ति खेटाश्चरणाभिवृद्धया । मन्दो गुरुर्भूमिसुताः परे च क्रमेण सम्पूर्णदृशो भवन्ति ॥" इति वचनेन यदि द्रष्टृदृश्यग्रहयोरन्तरमेको राशिस्तदा द्रष्टुर्ग्रहात् दृश्यो द्वितीये राशौ तत्र दृष्टिः शून्यम् । यदि तयोरन्तरं द्वौ राशी तदा द्रष्टृग्रहात्तृतीये दृश्यग्रहस्तत्रैकचरणो दृष्टिः, यदि तयोरन्तरं राशित्रयं तदा दृश्यस्य चतुर्थस्थानस्थितत्वात् त्रिपादमिता दृष्टिरेवं सर्वे दृष्टिध्रुवांका उपपद्यन्ते । अनयैव युक्त्योपरोक्तवचनेन गुरोश्चतुरष्टरा-

श्यन्तरे, शनेर्द्विनवराश्यन्तरे भौमस्य त्रिसप्तराश्यन्तरे सम्पूर्णदृष्टिश्चतुश्चरणात्मिका भवत्यतस्तत्र तेषां चत्वारो राशिजाङ्का ग्राह्या इत्युपपन्नम्।

अथ सिद्धदृष्टिचरणचक्रम्—

| शेषराशि- | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| दृष्टिपादाङ्काः- | ० | १ | ३ | २ | ० | ४ | ३ | २ | १ | ० | ० | ० |

अथ दृष्टिसाधनोपपत्तिः—द्रष्टुर्ग्रहात् कियतान्तरेण दृश्यग्रहोऽग्रतो वर्तते तज्ज्ञानार्थमेव द्रष्टा वर्जितः कार्य्यः। तत्र शेषराशिसंख्याधःस्थोऽङ्को ग्राह्योऽशादिभिश्चानुपातो—यदि त्रिंशदंशैर्गतैष्यान्तरतुल्यक्षयो वृद्धिर्वा लभ्यते तदा शेषांशे किमिति $= \frac{(\text{ग}-\text{ए}) \times \text{शेष}}{३०}$

अनेन फलेन गताङ्कः क्षयात्मकेन हीनो वृद्ध्यात्मकेन युतः कार्य्यस्तदा चरणात्मिका दृष्टिः स्यादतः सा चतुर्भक्ता रूपादिका भवतीत्युपपन्नम्॥४॥

भाषा—देखनेवाला द्रष्टा और जिसको देखे वह दृश्य कहलाता है। इसलिये जिस ग्रहकी दृष्टि साधन करना हो वह द्रष्टा, और जिस ग्रह वा भाव पर दृष्टि विचार करना हो वह दृश्य है। द्रष्टा ग्रहको दृश्यमें घटाकर राशिस्थानमें यदि एक शेष बचे तो ०, दो बचे तो १, तीन बचे तो ३, चार बचे तो २, पाँच बचे तो ०, छ बचे तो ४, सात बचे तो ३ आठ बचे तो २, नौ बचे तो १, और दश, ग्यारह, बारह, बचे तो ०, ये राशिज अंक होते हैं। फिर राशिज अंक और उससे अग्रिम अंक के अन्तर से शेष अंशादि को गुणा करके उसमें ३० का भाग देकर लब्ध (राशिज अंक से अग्रिमांक अल्प हो तो क्षय, और अधिक हो तो धन होता है। उसको) क्षय को राशिज अंक में घटावे और धन को जोड़े फिर उसमें चार का भाग देने से लब्धि रूपादिक दृष्टि होती है॥४॥

उ० दी०—द्रष्टा रविणा १०।१२।५७।३८ दृश्यश्चन्द्रो ७।१।४।१५ वर्जितः शेषम् ८।१८।६।३७ अत्र राशिः ८ अतो भादिजोऽङ्क २ एतस्याग्रिमाङ्कः १ अनयोरन्तरमृणम् १ अनेन शेषांशान् १८।६।३७ संगुण्य १८।६।३७ त्रिंशता विभज्य लब्धेना ००।३६।१३ तेन भादिजोऽङ्कः २ रहित १।२३।४७ अभ्युद्धृता जाता चन्द्रोपरि रवेर्दृष्टिः

००।२०।५७ एवं सर्वेषां ग्रहाणाम् द्र० १२ चक्रम्। एवमेव भावोपरि ग्रहाणां दृष्टिर्भवति द्र० १३ चक्रम् ॥ ४ ॥

अथ ग्रहाणामुच्चबलं सप्तवर्गजबलं चाह —

**नीचोनो भगणाच्च्युतः षडधिकश्चेत्षड्हृदोच्चं बलं**
**स्वर्क्षेऽर्धं समभेऽष्टमस्त्रिचरणा मूलत्रिकोणे बलम्।**
**मित्रर्क्षेऽङ्घ्रिरधीष्टभे त्रय इभांशा वैरिभेऽष्ट्यंशको**
**दन्तांशोऽध्यरिभे गृहादिपवशात्खेटस्य सप्तैक्यजम् ॥५॥**

व्या० - नीचोनो ग्रहश्चेद्यदि षडधिकस्तदा भगणाद् द्वादशराशिभ्यश्च्युतः शोधितः षड्हृत् षड्भक्तः फलं ओच्चमुच्चसम्बन्धिबलं भवति, स्वर्क्षे स्वराशौ अर्धं रूपार्धं चरणद्वयमिति यावत् बलं स्यात्, समभेऽष्टमोऽष्टमांशो बलं, मूलत्रिकोणे त्रिचरणाः, मित्रर्क्षेऽङ्घ्रिरेकचरणः, अधीष्टभेऽधिमित्रराशौ त्रय इभांशास्त्रिगुणिताष्टमांश इत्यर्थः, वैरिभे शत्रुराशौ अष्ट्यंश- षोडशांशः, अध्यरिभेऽधिशत्रुराशौ दन्तांशो द्वात्रिंशद्भागो बलं स्यात्। एवं खेटस्य सप्तैक्यजं सप्तानां ( गृह-होरा-द्रेष्काण-सप्तमांश-नवमांश द्वादशांशत्रिंशांशानां ) वर्गाणामैक्यजं योगजं बलं गृहादिपवशात् गृहादिसप्तवर्गस्वामिवशात् ग्राह्यमित्यर्थः। अत्रत्यविशेष उदाहरणे विलोक्यः ॥५॥

अत्रोपपत्तिः — यः कश्चिदुच्चस्थित उच्चकर्मकृत् स बलवान्, यश्च नीचस्थो नीचकर्मकृत् स निर्बलो भवतीति सर्वत्र प्रसिद्धमेवास्ति। अत एव नीचस्थस्य ग्रहस्यापि बलं शून्यं, तत उच्चाभिमुखं गच्छतो बलमप्युपचीयमानं परमोच्चस्थाने परमं रूपमितं भवितुमर्हति। अत एव यथा यथा नीचग्रहयोरन्तरमधिकं तथा तथा बलस्याप्याधिक्यमतो नीचग्रहान्तरवशेनैवोच्चबलस्यानयनं समुचितम्। उच्चसमे ग्रहे नीचग्रहान्तरं परमं षड्राशिसमं तत्र यदि परममुच्चबलं रूपमितं तदेष्टनीचग्रहान्तरेण किमिति $= \frac{(\text{ग्र} - \text{नी}) \times १}{६} =$ इष्टोच्चबलं स्यादेव। तथा च परमोच्चस्थानाद् भिन्नस्थानस्थे ग्रहे नीचग्रहान्तरं यदेव षड्भाल्पं तदेव बलानयनार्थं ग्राह्यम्। तत्तुल्यात् पृष्ठस्थे ग्रहे नीचोनो ग्रहः षड्भाल्प एव। उच्चादग्रस्थे ग्रहे नीचोनो ग्रहः षड्भाधिकः स भगणाच्च्युतः षड्भाल्पो ग्रहोननीचसमो भवितुमर्हत्यतो

"नीचोनो भगणाच्च्युतः षडधिकः" इत्युक्तं सयुक्तिकमेव। उच्चस्थाने सर्वोत्कृष्टत्वाद्रूपमितं पूर्णं बलं, ततः क्रमापचयेन मूलत्रिकोणादौ तारतम्यात् त्रिचरणादिबलं स्वीकृतमाचार्यैरित्युपपन्नम् ॥ ५ ॥

भा०—स्पष्ट ग्रहमें अपने नीचको घटावे यदि ६ राशिसे अल्प हो तो उसीमें ६ का भाग देनेसे, यदि ६ राशि से अधिक हो तो उसको १२ राशिमें घटाकर शेषमें ६ का भाग देनेसे उस ग्रहका उच्च बल होता है। अपनी राशिमें दो चरण, समकी राशिमें, अष्टमांश, मूलत्रिकोणमें तीन चरण, मित्रकी राशिमें एक चरण, अधिमित्रकी राशिमें त्रिगुणित अष्टमांश, शत्रुकी राशिमें षोडशांश, अधिशत्रुकी राशिमें बत्तीसवाँ भाग बल होता है। इस प्रकार ग्रहोंके सप्तवर्गज बल गृहादि सप्तवर्गके स्वामीके वशसे ग्रहण करना चाहिए। अर्थात् ग्रह जिसके वर्ग में हो वह मित्र शत्रु आदिमें जो हो वही बल ग्रहण करे ॥

विशेष—जो राशि स्वगृह और मूलत्रिकोण दोनों होता हो, अथवा उच्च, स्वगृह और मूलत्रिकोण तीनों होता हो तो वहाँ कौन बल ग्रहण करना चाहिए इस विषयके निर्णयमें सारावलीके वचन उदाहरण ( २४ ) चक्रमें लिखा है देखो ॥५॥

उ० दी० – अत्र तावत् ग्रहाणामुच्चनीचविभागो बृहज्जातके—

'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुंगाः।
दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥"

अत्र सूर्यः १०। १२। ५७। ३८ अस्य नीचम् ६।१० नीचोनः सूर्यः ४।'२।५७।३० षड्भाल्पत्वाच्चक्रान्न शोधितोऽतः षड्भकलब्धं शून्यम् ०० शेषम् ४।'२।५७।३० षष्ट्या संगुण्य स्वस्वस्थानीयहारेण विभज्य लब्धमुपर्युपरि संयोज्य जातम् २४५।२७।'३ षड्भकलब्धं ४० शेषम् ५।२७।३० पुनः षष्ट्या सगुण्य स्वस्वहारेण विभज्य जातं राश्यादिस्थानीयम् ३५४। '३ षड्भकलब्धम् ५६ अतः रवेः रूपाद्युच्चबलम् ००।४०।५६ एवं सर्वेषाम्। द्र० १४ चक्रम्।

अथ निसर्गमित्रसमशत्रवः १५ चक्रत एव ज्ञेयाः किमत्र लेख प्रयासेन। तात्कालिकमित्रामित्रज्ञानार्थं तु—

"अन्योन्यस्य धनव्ययायसहजव्यापारबन्धुस्थिता-
स्तत्काले सुहृद इति।"

यथात्र रवेर्द्वितीयो भौमः चतुर्थो गुरु, दशमश्चन्द्र, एकादश-शुक्रः एते मित्राणि। अन्योन्यस्येत्याद्युक्तस्थानेभ्योऽन्यत्रस्थौ बुधशनी तेन सूर्यस्य बुधशनी शत्रू भवतः। एवं सर्वेषां विचार्य्यम्। अधि-

मित्रादिचक्रार्थं तु द्रष्टव्या १७ चक्राध स्थिता चण्डेश्वरोक्तिः। अलमत्र लेखविस्तरेणेति ।

अथ सप्तवर्गैश्वरचक्र तु बृहज्जातकादित एव ज्ञेयम्। ततो बलम्। यथा—रविरधिशत्रुगृहेऽतो रूपस्य १ स्य दन्तांशो गृहबलम् ००।१।५२ । स्वहोरायामर्द्धम् ००।३०।०० शत्रुद्रेष्काणेऽतोऽष्टमांशः ००।३।४५। समसप्तमांशेऽतोऽष्टमांशक. ००।७।३० । अधिशत्रुनवमांशे दन्तांश ००।०१।५२ अधिमित्रद्वादशांशे नय इभांशा. ००।२२।३० अधिमित्रत्रिंशांशेऽपि नय इभांशा ००।२२।३० एव सर्वेषाम्। द्र० २४ चक्रम्।

अथैषा सप्तवर्गजबलानां योगो रवेरैश्यज बलम् १।२६।५६। एव सर्वेषाम्। द्र० २५ चक्रम् ॥ ५ ॥

अथ युग्मायुग्मराशिनवांशबल केन्द्रादिबल चाह—

शुक्रेन्दू समभांशके हि विषमेऽन्ये दद्युरङ्घ्रिं बलं
केन्द्राद्येषु च रूपकार्धचरणान् यच्छन्ति खेटाः क्रमात् ।
स्त्रीखेटौ चरमे नराः प्रथमके क्लीबौ च मध्ये तथा
द्रेष्काणे वितरन्ति पादमुदितं स्यात् स्थानवीर्यं त्विदम् ॥६॥

व्या०—शुक्रेन्दू समभांशके समराशौ समनवांशके वा स्थितौ तदाङ्घ्रिमेकचरण बलं दद्याताम्, यदि समराशौ समनवांशे चोभयत्र स्थितौ तदा पादद्वयमन्यथा शून्यम्बलमित्यर्थत एव सिद्ध स्यात्। तथान्ये रविकुजबुधगुरुशनय विषमे विषमराशौ विषमनवांशे वा स्थिता अङ्घ्रिमेकचरण बल दद्यु यदि विषमराशौ विषमनवांशे चोभयत्र स्थितास्तदा पादद्वयमन्यथा शून्य बल स्यात्। अथ केन्द्रादिबलमाह—केन्द्राद्येषु केन्द्र—पणफरापोक्लिमेषु स्थिता खेटा सर्वे ग्रहा क्रमेण रूपकार्धचरणान् बलानि यच्छन्ति, केन्द्रस्था रूपतुल्य, पणफरस्था अर्धं, आपोक्लिमस्थाश्चरणमेकचरण बलं ददतीत्यर्थ । अथ द्रेष्काणबलमाह—स्त्रीखेटौ, चन्द्रशुक्रौ चरमे तृतीयद्रेष्काणे, नरा पुरुषग्रहा रविकुजगुरव प्रथमके प्रथमद्रेष्काणे तथा क्लीबौ नपुसकौ शनिबुधौ मध्ये द्वितीयद्रेष्काणे पादमेकचरण बलमिति यथोक्ता ग्रहा वितरन्ति ददतीत्यर्थं । इद पद्यधादित स्थानवीर्यं स्यात् ॥ ६ ॥

अत्रोपपत्ति—समराशीनां स्त्रीराशित्वात् चन्द्रशुक्रयोश्च स्त्री

००।००।०० एषां पञ्चानामैक्यं रवेः स्थानवलं जातम् २।५५।५८ एवं चन्द्रादीनामपि। द्र० २६ चक्रम् ॥६॥

अथ दिग्बल-कालबल-पक्षबलान्याह—

**मन्दाल्लग्नमिनात्कुजाच्च हिबुकं शोध्यं विधोर्भार्गवात्**
**माध्यं ज्ञाद् गुरुतोऽस्तमत्र रसभात्पुष्टं त्यजेच्चक्रतः।**
**दिग्वीर्यं रसहृत्तथो समयजं रूपं सदा स्याद्विद-**
**स्त्रिशद्भक्तनतोन्नते शशिकुजार्कीणां परेषां बले ॥७॥**

व्या०—मन्दात् शनैश्चराल्लग्नं, इनात् सूर्यात् कुजाच्च हिबुकं चतुर्थलग्नं, विधोश्चन्द्रात् भार्गवाच्च माध्यं दशमलग्नं, ज्ञात् गुरुतश्चास्तं सप्तमलग्नं शोध्यं तद्रसभादधिकं चेत्तदा चक्रतो द्वादशराशिभ्यस्त्यजेत् तद् रसहृत् षड्भक्तं दिग्वीर्यं स्यात्। अथो समयजं बलमाह—विदो बुधस्य समयजं बलं सदा सर्वस्मिन् काले रूपं स्यात्। त्रिशद्भक्तनतोन्नते क्रमेण शशिकुजार्कीणां परेषां च बले भवतः, त्रिंशद्भक्तनतं शशिकुजार्कीणां बलं, त्रिंशद्भक्तोन्नतं रविगुरुशुक्राणां बलं स्यादित्यर्थः ॥७॥

अत्रोपपत्तिः—यो ग्रहो यस्यां दिशि बलवान् तत्सम्बन्धि बलं दिग्बलमित्युच्यते। तत्र ग्रहाणां दिक्क्रमस्तु राशिचक्र एव। यथोक्तं भास्कराचार्यैः—"यत्र लग्नमपमण्डलं कुजे तद् गृहाद्यमिह लग्नमुच्यते प्राचि पश्चिमकुजेऽस्तलग्नकं मध्यलग्नमिति दक्षिणोत्तरे ॥" एतेन लग्नं पूर्वदिशि, सप्तमलग्नं पश्चिमदिशि, चतुर्थलग्नमुत्तरदिशि दशमलग्नं दक्षिणदिशीति प्रत्यक्षतोऽपि दृश्यते। तथा च—"दिक्षु बुधाङ्गिरसौ रविभौमौ सूर्यसुतः सितशीतकरौ च"। इति वराहमिहिरवचनेन ग्रहाणां दिक्सम्बन्धेन बलोपचयापचयौ सिद्धौ। तत्र यथोक्तदिशि ग्रहो पूर्णबली ततश्च यथा यथा विप्रकर्षस्तथा तथा बलस्यापचयः, परमे विप्रकर्षे बलाभाव इति युक्त्या सिद्ध्यति। परमविप्रकर्षस्तु षड्भान्तर एव भवितुमर्हति। यथा शनेः पश्चिमे (सप्तमलग्ने) पूर्णं बलं ततः क्रमापचयेन (प्राचि, प्रथमलग्ने बलाभावः ततश्च क्रमोपचयेन सप्तमे पुनः पूर्णं बलम्, अतो यथा यथा बलाभावस्थानग्रहयोरन्तरमधिकं तथा तथा बलाधिक्यमिति सिद्ध्यति। अतोऽनुपातेनेष्टदिग्बलसाधनं समुचितम्। यथा—यदि लग्नशन्योः पर-

मान्तरेण षड्राशिमितेन पूर्णं रूपमितं बलं लभ्यते तदेष्टलग्नशन्यन्तरेण किमिति शनेर्दिग्बलम् $= \frac{१ \times (श - ल)}{६}$। एवं सर्वेषां ग्रहाणां बलानयनमुपपद्यते। षड्भाल्पान्तरग्रहणार्थं चक्रशोधनमपि सयुक्तिकमेवेत्युपपन्नं दीग्वीर्यं रसहृदित्यन्तम्। अथ कालबलोपपत्तिः—"निशि शशिकुजसौराः सर्वदा ज्ञोऽह्नि चान्ये" इति वराहमिहिरवचनेन बुधस्य सर्वदा रूपं बलम्। शशिकुजार्कीणां रात्रौ बलवत्त्वान्मध्यरात्रौ पूर्णं बलं तत्र नतं पूर्णं त्रिंशद्घटिकातुल्यम्। दिने निर्बलत्वान्मध्याह्ने बलाभावस्तत्र नतमपि शून्यमतो नतवशेनैव बलोपचयापचयौ सिद्धावतोऽनुपातो यदि त्रिंशत्तुल्ये परमनते पूर्णं बलं रूपमितं लभ्यते तदेष्टनते किमिति $= \frac{१ \times नत}{३०} =$ शशिकुजार्कीणां बलम्। एवं रविगुरुशुक्राणां दिने बलित्वान्मध्याह्ने पूर्णं बलं तत्रोन्नतं पूर्णं त्रिंशत्तुल्यम्, रात्रौ निर्बलत्वान्मध्यरात्रौ बलाभावस्तत्रोन्नताभावोऽतः पूर्ववदनुपातेन तेषां कालबलम् $= \frac{१ \times उन्नत}{३०}$ इत्युपपन्नम् ॥७॥

भा०—शनैश्चर में लग्न को, रवि और मंगल में चतुर्थभाव को, चन्द्र और शुक्र में दशम भाव को, बुध और बृहस्पति में सप्तम भाव को घटावे शेष यदि ६ राशि या ६ राशि से अल्प हो तो उसी में, यदि ६ राशि से अधिक हो तो १२ राशि में घटाकर जो बचे उस में ६ का भाग देने से लब्धि ग्रहों का दिग्बल होता है। अथ कालबल कहते हैं—बुध का बल सर्वदा रूप [ १ ] होता है। तथा नत *घटी को ३० से भाग देने से लब्धि चन्द्र, मंगल, शनि का बल, और उन्नत घटी* में ३० से भाग देने से लब्धि रवि, गुरु शुक्र का बल होता है ॥ ७ ॥

उ० दी०—रवे १०। १२। ५७। ३८ रसाढ्दिगुक्तं ९। २१।२३।१५ विशोध्य शेषम् ००। २१। २४।२३ षड्भक्तलब्धम् ०० शेषम् २१।२४।२३ इदं षष्ट्या संगुण्य स्वस्वस्थानीयहरेण विभज्य लब्धमुपर्युपरि संयोज्य जातम् ४२। २४। २३ पुनः षड्भक्तलब्धम् ७ शेषम् ००। २४। २३ पुनरपि षष्ट्या संगुण्य स्वस्वहारेण विभज्य लब्धमुपर्युपरि संयोज्य राश्यादिस्थानियं जातम् ४८। २३। ०० अत्रापि षड्भक्तलब्धम् ८। अतो जातं रवेर्दिग्बलम् ००। ७। ८। एवं चन्द्रादीनां तत्तत्कालस्य साध्यम्। द्र० ३० चक्रम्। अथ नतम् २५।२६ त्रिंशता भक्तं जातं शशि-

कुजार्कीणां बलम् ००।५२।५८ अथोन्नतम् ३ । ३१ । त्रिशता भक्तलब्धं रविगुरुशुक्राणां बलम् ०० । ०३ । ०।२। बुधस्य सर्वदा बलम् १।००।०० एवं नतोन्नतबलं जातम् । द्र० ३१ चक्रम् ॥७॥

अथ पक्षबलं त्र्यंशबलं वर्षेशादिबलञ्चाह—

**शुक्लेऽन्त्ये तिथिहृद्गतैष्यतिथयो वीर्यं सतां भूच्युतं**
**पापानां द्विगुणं विधोरिदमथाह्नस्त्र्यंशकेषु क्रमात् ।**
**सौम्यार्कार्कभुवां निशः शशिसितारार्णा च रूपं सदे-**
**ज्यस्याथाङ्घ्रिचयाद्बली किल समामासद्युहोरेश्वरः ॥८॥**

व्या० — शुक्ले शुक्लपक्षे अन्त्ये कृष्णपक्षे क्रमेण तिथिहृद्गतै-ष्यतिथयः ( शुक्ले तिथिभिः पञ्चदशभिर्हृता गततिथयः, कृष्णे पञ्चदशभक्ता एष्यतिथय इत्यर्थः ) सतां शुभग्रहाणां वीर्यं बलं पक्षबलं स्यादिति । तत् शुभबलं भूच्युतं रूपाद्विशुद्धं पापानां पाप-ग्रहाणां पक्षबलं स्यात् । विधोश्चन्द्रस्य इदं पक्षबलं द्विगुणं विधेयम् । अथ दिनरात्रित्रिभागबलमाह — अह्नो दिनस्य त्र्यंशकेषु क्रमात् सौम्यार्कार्कभुवां ( प्रथमत्र्यंशे सौम्यस्य बुधस्य, द्वितीयत्र्यंशेऽर्कस्य सूर्यस्य, तृतीयत्र्यंशेऽर्कभुवः शनैश्चरस्येत्यर्थः रूपं बलं स्यात् । तथा निशो रात्रेस्त्र्यंशकेषु क्रमात् शशिसितारार्णा चन्द्रशुक्रकुजानां रूपं बलं स्यात् । इज्यस्य बृहस्पतेः सदा सर्वस्मिन् काले रूपं बलं भवति । अथानन्तरं वर्षेशादिबलं कथयति समा—मासद्युहोरेश्वरः क्रमादङ्घ्रिचयाच्चरणवृद्धितो बली स्यात् ( वर्षेश्वरस्यैकचरणतुल्यं, मासेश्वरस्य चरणद्वयं, दिनेश्वरस्य चरणत्रयं, होरेश्वरस्य चरण-चतुष्टयं बलं भवतीत्यर्थः ॥८॥

अत्रोपपत्तिः—" बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण " इति वराहमिहिरोक्तेन शुक्लपक्षे शुभग्रहाः बलिनः पापग्रहाः निर्बलाः, कृष्णपक्षे पापग्रहा बलिनः शुभाश्च निर्बला इति । तत्र शुक्लपक्षे द्विज-राजस्य चन्द्रस्य शुक्लवृद्धया साधूनामिव शुभग्रहाणां बलवृद्धिः, चौराणामिव पापग्रहाणां बलक्षयः । एवं पूर्णिमान्ते चन्द्रशुक्लस्य परमत्वात् शुभानां बलं परमं रूपमितं, पापग्रहाणां बलाभावस्तत्र गतशुक्लतिथयः पञ्चदश, तथैष्यकृष्णतिथयश्च, पञ्चदश । अतः शुक्ले गततिथिवृद्धया, कृष्णे चैष्यतिथिवृद्धया शुभग्रहाणां बलवृद्धिः सिद्धाऽ-

तोऽनुपातेन शुक्लपक्षे शुभग्रहबलम् $= \frac{१ \times गति}{१५}$ । एवं कृष्णपक्षे शुभबलम् $= \frac{१ \times एति}{१५}$ । पापग्रहाणां तु पूर्वोक्तयुक्त्या शुक्ले एष्य-तिथिवृद्धया कृष्णे च गततिथिवृद्धया बलवृद्धिस्ततोऽनुपातेन शुक्ल पक्षे पापग्रहबलम् $= \frac{१ \times एति}{१५} = \frac{१५ - गति}{१५} = १ - \frac{गति}{१५}$ । एवं कृष्णपक्षे पापबलम् $= \frac{१ \times गति}{१५} = \frac{१५ - एति}{१५} = १ - \frac{एति}{१५}$ । एतेन शुभ-बलोनं रूपमेव पापबलं सिद्धमतो "भूच्युतं पापाना" मित्यन्तमुप-पन्नम्। तथा चन्द्रस्य यावदेव पक्षबलं तावदेव चेष्टाबलमपि भव-त्यतोऽत्रैव द्विगुणित पक्षबलमेव तयोर्योगसमं गृहीतमत एव "प्राग्वच्च वीर्याय ते" इत्यग्रे वक्ष्यते। दिनरात्रित्र्यंशबलोपपत्तौ तु--' निशामुखे शीतरुचिर्बलीयान् भृगुर्निशीथे कुसुतो निशान्ते। प्रातर्बुधो मध्यदिने दिनेशः शनिर्दिनान्ते धिषणः सदैव ॥" इति होरामकरन्दोक्तमेव प्रमाणम्। अथ वर्षेशमासेशदिनेशहोरेशानां मध्ये वर्षेशस्य सर्वापे-क्षयाऽधिककालेनावृत्तिर्भवति ततोऽल्पकालेन मासेशस्य ततोऽप्यल्प कालेन दिनेशस्य ततोऽल्पेन होरेशस्य पुन पुनरावृत्तिर्भवति। अत आवृत्त्यधिक्यवशादेव पादवृद्ध्या वर्षेशादीनां बलानि पठितानीति॥८॥

भा०—शुक्लपक्ष में गत तिथि को, कृष्णपक्ष में एष्य तिथि को १५ से भाग देकर लब्धि शुभ ग्रह का पक्षबल होता है। और शुभ ग्रह के पक्षबल को १ में घटाकर पाप ग्रह का पक्षबल होता है। चन्द्रमा के पक्षबल को द्विगुणित कर देना चाहिये। अब त्र्यंशबल कहते हैं-दिन के प्रथम त्र्यंश में बुध का, द्वितीय त्र्यंश में सूर्य का तृतीय त्र्यंश में शनि का रूप (१) बल होता है। रात्रि के प्रथम त्र्यंश में चन्द्रमा का, द्वितीय त्र्यंश में शुक्र का, तृतीय त्र्यंश में मङ्गल का रूप १ बल होता है। तथा बृहस्पति का सदा रूप १ बल होता है। और वर्षेश का १ चरण, मासेश का २ चरण, दिनेश का ३ चरण, होरेश का ४ चरण (रूप तुल्य) बल होता है॥८॥

उ० दी– गतैष्यतिथ्यानयनार्थं तु ३२ चक्राध स्थितगद्ये "सूर्योन चन्द्रस्य लवार्कभाग" इत्यादिपद्यं विलोक्यम्। ततोऽत्र कृष्णपक्षत्वा दैष्यतिथ्यादयः ८।२८।२७ एतत्पञ्चदशाप्त ००।३३।५८ इदं शुभग्रहाणां पक्षबलम्। एतदेव रूपाच्छोधितं ००।२६।०२ इदं पापानां पक्ष बलम्। पापग्रहशुभग्रहाणां निर्णय ३२ चक्राध स्थितगद्य एव द्रष्टव्यः। द्र० ३२ चक्रम्।

अथ रात्रेर्मध्यत्र्यंशे जन्म तेन शुक्रस्य रात्रित्र्यंशबलम् १।००।०० गुरोस्तु सर्वदा त्र्यंशबलं रूपतुल्यमेवान्येषां शून्यम् द्र० ३३ चक्रम्।

अथ समामासयुद्धोरेश्वरज्ञानार्थं द्रष्टव्यं ३४ चक्राधःपद्यम्। ततो वर्षेशो होरेशश्चापि चन्द्र एवातोऽधिकारद्वयस्य बलम् १।१५।०० मासेश्वरो रविस्तेन चरणद्वयं बलम् ००।३०।०० दिनेशो बुधस्तेनास्य चरणत्रयं बलम् ००।४५।०० अन्येषामनधिकारिणां शून्यम्। द्र० ३४ चक्रम्।

अथ रवेर्नतोन्नतबलम् ००।७।'२ पक्षबलम् ००।२६।'२ दिनरात्रित्रिभागबलम् ००'००।०० वर्षेशादिबलम् ००।३०।०० एषां चतुर्णां योगेन जातं कालबलम् १।'३।'४ एवमन्येषाम्। द्र० ३५ चक्रम् ॥८॥

अथायनबलमाह—

सदा क्रान्तिभागैर्युता ज्ञस्य सिद्धाः
शनीन्द्वोर्युतोनाः क्रमाद्याम्यसौम्यैः।
विलोमं परेषां गजाम्भोधिभक्ता
भवेदायनं वीर्यमर्कस्य दृग्घ्नम् ॥ ९ ॥

व्या०—ज्ञस्य बुधस्य सदा याम्यैः सौम्यैर्वा क्रान्तिभागैर्युताः सिद्धा श्चतुर्विंशतिर्गजाम्भोधिभक्ता आयनमयनसम्बन्धि वीर्यं बलं भवेत्। शनीन्द्वोः शनिचन्द्रयोर्याम्यसौम्यैः क्रमाद्युतोनाः ( याम्यक्रान्तिभागैर्युताः सौम्यैश्चोनाः ) सिद्धा गजाम्भोधिभिरष्टचत्वारिंशता भक्ता आयनं बलं स्यात्। परेषां रविकुजगुरुशुक्राणां विलोमं याम्यक्रान्तिभागैरूनाः सौम्यैर्युताः सिद्धा गजाम्भोधिभक्ता लब्धिरायनं वीर्यं भवेत्। अर्कस्यायनं बलं दृग्घ्नं द्विगुणं कार्यम् ॥ ९ ॥

अत्रोपपत्तिः—अयनवशादुत्पन्नं बलमायनं बलम्। तद्बोधकं पद्यं सारावल्याम्—"उत्तरमयनं प्राप्ताः शुक्रकुजार्कसुरमन्त्रिणो बलिनः। याम्ये शशिरविपुत्रौ द्वयमपि शशिजः स्ववर्गसंस्थश्च॥" इति वचनेन बुधोऽयनद्वयेऽपि बलवानतो बुधस्य परमोत्तरगमनान्मिथुनान्ते परमं पूर्णं रूपमितं, परमदक्षिणगमनाद्धनुरन्ते च परमं रूपमितं बलम्। तयोर्मध्ये गोलसन्धौ तु रूपार्धं बलं भमितुमर्हत्ययनद्वयेऽपि सबलत्वात्। ततः क्रान्त्युपचयेन बलोपचयोतोऽनुपातो यदि परमक्रान्त्यंशैश्चतुर्विंशत्यंशै रूपार्धतुल्यं बलमुपचीयते तदेष्टक्रान्त्यंशैः किमितीष्ट-

क्रान्तौ बलवृद्धिः $= \frac{१ \times \text{बुक्रां,}}{२४} = \frac{\text{बुक्रां,}}{४८}$ एतद्युतं गोलसन्धिजबलं बुधस्यायनं बलम् $= \frac{१}{२} + \frac{\text{बुक्रां,}}{४८} = \frac{२४ + \text{बुक्रां}}{४८}$ अत उपपन्नम् बुधस्यायनबलानयनम् । शनिचन्द्रयोर्याम्यायने बलवत्वात् परमयाम्यक्रान्तौ परमं रूपमितं बलं परमोत्तरक्रान्तौ बलाभावस्तयोर्मध्ये गोलसन्धौ रूपार्धं बलं भवितुमर्हति । तेन याम्यकान्तिवृद्धया बलवृद्धिः सौम्यकान्तिवृद्धया क्रमेण बलह्रानिरित्यतः पूर्ववदनुपातेन याम्यकान्तिभागैर्बलमानीय गोलसन्धिजबले योज्यं, सौम्यक्रान्तिभागैर्बलं प्रसाध्य गोलसन्धिजायनबला ( $\frac{१}{२}$ ) दस्माद्विशोध्यमेवं शनिचन्द्रयोरायनबलानयनमुपपद्यते । अन्येषां ( रविकुजगुरुशुक्राणां सौम्यायने बलित्वादुक्तयुक्त्या सौम्यक्रान्तिवृद्‌ध्या बलवृद्धिर्याम्यक्रान्तिवृद्‌ध्या बलह्रासस्तेन सौम्यक्रान्त्यंशैबलम्प्रसाध्य गोलसन्धिजबले योज्यं, याम्यक्रान्त्युत्पन्नबलं सन्धिजबलाद्‌ रूपार्धमिताच्छोध्यमतो "विलोमं परेषामित्युपपद्यते । रवेरायनबलतुल्यमेव चेष्टाबलं भवत्यतो आयनबलमेव द्विगुणितं कृत्वाग्रेऽर्कस्य चेष्टावलं बलत्वेन न गृहीतमतः "प्राग्वच्च वीर्याय ते" इति वक्ष्यते ॥९॥

भा०—बुध के उत्तर वा दक्षिण क्रान्त्यंश जो हो उसको सर्वदा चौविस (२४) में जोड़कर ४८ का भाग देने से बुध का अयन बल होता है। तथा शनि और चन्द्रमा की याम्य क्रान्ति को २४ में जोड़कर, और सौम्य क्रान्ति को २४ में घटा कर ४८ का भाग देने से, एवं रवि मङ्गल बृहस्पति शुक्र की दक्षिण क्रान्ति को २४ में घटाकर, और उत्तर क्रान्ति को जोड़कर ४८ का भाग देने से आयन बल होता है। इस प्रकार सूर्य का अयन बल जो हो उसको दूना करें, तो चेष्टा बल सहित अयन बल होता है ॥९॥

उ० दी०—तत्र तावत् क्रान्त्यंशानयनचक्रं द्रष्टव्यम् '२६ चक्रतले। यथात्र रवेः—"चत्वारिंशदशीतिरित्यादिना" सायनार्कः ११।'३।२१।३१ अस्य भुजांशाः २६।३८।२६ अस्य दशमांशलब्धम् २ अतो गताङ्कः ८० अग्रिमाङ्कः ११७ गतैष्याङ्कयोरन्तरम् ३७ अनेन शेषांशाद्यो ६।३८।२६ गुणिताः २४५।४३।५३ दशहृल्लब्धम् २४।३४।२३ अनेन गताङ्को ८० युक्तः १०४।३४।२३ दशभक्तः लब्धा दक्षिणक्रान्त्यंशाः १०।२७।२६ रवेर्दक्षिणगोलगतत्वात् । एवं चन्द्रादीनामपि । द्र० ३६ चक्रम्।

अथ रवेः क्रान्तिभागे १०।२७।२६ रेभिर्याम्यगोलगतत्वात् सिद्धा २४ ऊनाः १३।३२।३४ गजाम्भोधिभि ४८ रेभिर्भक्ताः लब्धमायनं बलम् ००।१६।५६ एवमन्येषाम्। अत्रेदमप्यवधेयं यद्रवेरायनचेष्टाबलयोस्तुल्यत्वादत्रैवायनबलं द्विगुणं विधाय चेष्टाबलानयनं न कृतमाचार्य्येण, किञ्चेहोदाहरणे पृथक् चेष्टाबलमानीतं तेनैकगुणमेव चक्रे निहितम्। द्र० ३७ चक्रम् ॥ ९ ॥

अथ चेष्टाबलं नैसर्गिकबलं चाह—

मध्यस्पष्टयुतेर्दलोनितचलं चेष्टाख्यकेन्द्रं कुजात्
स्याच्चेत्तद्भगणाच्च्युतं षडधिकं षड्हृच्च चेष्टाबलम्।
स्यादेकोत्तररूपमद्रिविहृतं नैसर्गिकं स्याद्बलम्
मन्दारज्ञसुरेज्यशुक्रशशभृत्तीक्ष्णद्युतीनां क्रमात् ॥१०॥

स्वा० — मध्यस्पष्टयुतेर्दलोनितचलं मध्यस्पष्टग्रहयोगस्यार्धेणोनितं चलं शीघ्रोच्चं कुजात् कुजमारभ्य चेष्टाख्यकेन्द्रं स्यात्। तत् चेष्टाकेन्द्रं चेत् षडधिकं षड्राशिभ्योऽधिकं तदा भगणात् द्वादशराशितश्च्युतं शुद्धं षड्हृत् चेष्टाबलं स्यात्। अथ नैसर्गिकबलमाह-एकोत्तरं रूपं अद्रिविहृतं सप्तभिर्भक्तं क्रमात् मन्दारज्ञसुरेज्यशुक्रशशभृत्तीक्ष्णद्युतीनां नैसर्गिकं स्वाभाविकं बलं स्यात्। यथा रूपं सप्तभक्तं ,शनेर्बलं, रूपद्वयं सप्तभक्तं कुजस्य, रूपत्रयं सप्तभक्तं बुधस्यैवमग्रेऽपीति ॥१०॥

अत्रोपपत्तिः—"उदगयने रविशीतमयूखौ वक्रसमागमगाः परिशेषाः। विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्ययुताः परिकल्प्याः ॥" इति वराहमिहिरोक्तेः कुजादयो वक्रोपगता विपुलबिम्बत्वात् चेष्टाबलसहिता भवन्ति। वक्रता तु नीचासन्ने तत्रापि परमनीचे बिम्बस्यातिविपुलत्वाच्चेष्टाबलं परमं रूपमितं तत्र शीघ्रकेन्द्रमपि परमं षड्राशिसमम्, ततश्चाग्रे बिम्बविपुलतायाः क्रमापचयाच्चेष्टाबलस्य ह्रासः परमोच्चसाते बिम्बस्यातिसूक्ष्मत्वाच्चेष्टाबलाभावस्तत्र शीघ्रकेन्द्रस्याप्यभावादत एव शीघ्रोच्चग्रहान्तरवृद्ध्यैव चेष्टाबलवृद्धिः सिद्धाऽत एव शीघ्रोच्चग्रहान्तरमेव चेष्टबलकेन्द्रत्वेनोक्तम्। शीघ्रोच्चग्रहान्तरज्ञानार्थमेव "षडधिकं भगणाच्च्युतम्" इत्युक्तम्। ततोऽनुपातो यदि परमनीचस्थाने षड्राशितुल्येन शीघ्रोच्चग्रहान्तरेण रूप-

मितं चेष्टाबलं तदेष्टशीघ्रोच्चग्रहान्तरेण किमिति = $\frac{(\text{शीउ-ग्र})}{६}$ = इष्टचेष्टाबलम्। एवं चेष्टाबलं कुजादीनां पञ्चानामेव यतो रवेश्चेष्टाबलमायनबलतुल्यमतस्तदेव द्विगुणितम्। तथा चन्द्रस्य चेष्टाबलं पक्षबलतुल्यमतः पक्षबलमेव द्विगुणितं पूर्वमेव गृहीतमिति। अत्र स्पष्टग्रहस्थाने स्पष्टमध्ययोर्योगार्धं फलद्वयाधसंस्कृतमध्यतुल्यं स्वीकृतवानाचार्यैस्तत्रागम एव प्रमाणम्। अथ नैसर्गिकबलोपपत्तिः—"शकुबुगुशुचराद्या वृद्धितो वीर्यवन्तः" इति वराहमिहिरोक्तेन शन्यादयो ग्रहा वृद्धितः क्रमेण बलिनो भवन्ति। तत्र सर्वापेक्षया विम्बविपुलत्वात् सूर्यस्याधिकं बलं रूपमितम्, शनेः सर्वापेक्षया विम्बस्य सूक्ष्मत्वात् कारणादल्पं रूपसप्तमांशसमं $\frac{१}{७}$ भवितुमर्हति। ततो द्विगुणसप्तमांशसमं $\frac{२}{७}$ कुजस्य, त्रिगुणितसप्तमांशसमं $\frac{३}{७}$ बुधस्य। एवं गुरोः = $\frac{४}{७}$, शुक्रस्य = $\frac{५}{७}$, चन्द्रस्य $\frac{६}{७}$, रवेः $\frac{७}{७}$ = १। एतद्बलं सर्वदा स्थिररूपत्वान्नैसर्गिकमित्युक्तम्प्राचीनैरिति दिक् ॥१०॥

भा०—मध्यम स्पष्ट ग्रह के योगार्ध को शीघ्रोच्च में घटाने से भौमादि पाँच ग्रहों का चेष्टा केन्द्र होता है, यदि वह ६ राशि से अधिक हो तो फिर उसको १२ में घटाकर चेष्टाकेन्द्र समझना। उस केन्द्र में ६ का भाग देने से लब्धि चेष्टाबल होता है। तथा—( एक से सात तक ) एकाद्येकोत्तर अंक को पृथक् पृथक् ७ से भाग देने से क्रम से शनि, मंगल, बुध, गुरु, शुक्र, चन्द्र, रवि इनका नैसर्गिक बल होता है। जैसे—१ में ७ का भाग देने से लब्धि ०।८।३४ शनि का। २ में ७ का भाग देने से ००।१७।९ मंगल का इत्यादि उदाहरण चक्र ४१ देखो ॥१०॥

उ० दी०—मध्यमकुजः ००।११।१६।४३ स्पष्टकुजः १०।२४।२७।१८ अनयोर्योगः ००।०५।४४।०१ अस्य दलं ००।०२।५२।००।३० अनेन कुजशीघ्रोच्चम् १०।११।११।४३ हीनं जातं चेष्टाख्यकेन्द्रम् १०।०८।१८।४२।३० इदं षडधिकमतो भगणेभ्यः १२ शोधितम् १।२१।४०।१८ इदं षड्भक्तं जातं कुजस्य चेष्टाबलम् ०।१७।१३ अत्रापि भजनप्रकार उच्चबलानयनवदेव ज्ञेयः। एवमन्येषामपि चेष्टाकेन्द्रबले साध्ये। द्र० ३८–३९ चक्रे। अथ रवेरायनबलम् ००।१६।५६ चेष्टाबलञ्च ००।१६।५६ अनयोर्योगः स्पष्टचेष्टाबलम् ००।३३।५२ एवं सर्वेषाम्। द्र० ४० चक्रम्। अथ ७ इदं सप्तभिर्भक्तं लब्धं रवेर्नैसर्गबलम् १।००।०० एवं ६ मिदं सप्तभक्तं लब्धम् चन्द्रनैसर्गिकबलम् ००।५१।२६ एवं सर्वेषाम्। द्र० ४१ चक्रम् ॥१०॥

अथ युद्धादिबलमाह —

युद्धे बाणवियोगहृत्खचरयोर्वीर्यैक्ययोरन्तरं
स्वं सौम्यस्थखगे क्षयं च यमदिक्संस्थस्य कुर्याद्बले।
सद्दृष्ट्यङ्घ्रियुगुग्रदृष्टिचरणोनं खेटवीर्यं भवेत्

व्या० — खचरयोः (भौमादिपञ्चानामन्यतमयोर्द्वयोः) ग्रहयोर्युद्धे (राश्यंशादितुल्यत्वे) सति तयोर्वीर्यैक्ययोः पूर्वोक्तषड्बलैक्ययोरन्तरं बाणवियोगहृत् (ग्रहयोर्दक्षिणोत्तरान्तररूपेण शरान्तरेण भक्तमित्यर्थः) युद्धबलं भवति। तत् सौम्यस्थस्योत्तरदिक्संस्थस्य बले स्वं धनं, यमदिक्संस्थस्य दक्षिणस्थस्य बले क्षयमृणं कुर्याद् गणक इति शेषः। शरान्तरं त्वेकदिशारन्तरेण भिन्नदिशोर्योगेन भवतीति ज्ञेयम्। तथा यस्य ग्रहस्य यद्दिक्शरो भवति स तद्दिक्स्थो ज्ञेयः। एकदिक्स्थयोर्यस्याल्पः शरः स तद्भिन्नदिक्स्थो भवतीति मतिमतानुक्रमपि ज्ञेयम्। एवं पूर्वानीतबलं सद्दृष्ट्यङ्घ्रियुक् प्रागानीतशुभग्रहदृष्टियोगचतुर्थांशेन युक्तं उग्रदृष्टिचरणोनं पापदृष्टियोगचतुर्थांशेन हीनं कार्यं तदा खेटवीर्यं ग्रहबलं भवेत्॥

अत्रोपपत्तिः—भौमादिपञ्चग्रहाणामन्यतमयोर्ग्रहयो राश्यंशादितुल्यत्वं युद्धलक्षणम्। तत्र "विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्ययुता: परिकल्प्याः।" इति बृहज्जातकवचनेन युद्ध उत्तरस्थस्य जयवशाच्चेष्टाबलवृद्धिर्दक्षिणस्थस्य पराजयवशाच्चेष्टाबलहानिः। उत्तरस्थस्य यावदेव बलाधिक्यं तावदेव दक्षिणस्थस्य बलाल्पत्वमपीत्यर्थात् सिद्धम्।

अत्रैककलातोऽल्पे शरान्तरेऽन्तराभाव एव स्वीकृतः। अतस्तत्र दक्षिणोत्तरान्तराभावेन जयपराजयाभावात् संस्काराभाव एव। ततश्च शरयोः कलातुल्येऽन्तरे दक्षिणोत्तरस्थत्वप्रवृत्तिस्तत्र ग्रहयोर्बलान्तरतुल्यो जयः पराजयश्च समुचितः। अथेष्टशरान्तरेणानुपातो-यदि कलामात्रेण शरान्तरेण बलान्तरतुल्यं बलं लभ्यते तदेष्टशरान्तरेण किमिति। अत्रेष्टशरान्तरस्य वृद्धौ बलस्य ह्रासात्, ह्रासे च वृद्धयाः "इच्छावृद्धौ फले ह्रासो ह्रासे वृद्धिः फलस्य तु। व्यस्तं त्रैराशिकं तत्र" इति व्यस्तत्रैराशिकेन बलान्तरमेकेन गुणितमिष्टशरान्तरेण भक्तम् $= \frac{\text{ब अं} \times 1}{\text{श अ}}$ इदं फलमुत्तरस्थस्य जयित्वाद् बले

धनं दक्षिणस्थस्य पराजयोक्तेर्बले क्षयं समुचितमेव। अथ दृष्टिसंस्कारोपपत्तिः—"बलवान् मित्रस्वगृहोच्चनवांशेष्विक्षितः शुभैश्चापि।" इति लघुजातकोक्त्या शुभैर्दृष्टो बलवान्, पापदृष्टश्च निर्बलः। तत्र चन्द्रगुरुशुक्राः सदैव शुभाः रविकुजशनयश्च सदैव पापाः। बुधस्य शुभयोगे शुभत्वाच्चत्वारः शुभाः, पापयोगे पापत्वात् चत्वारः पापा अपि। अथ यदि चत्वारोऽपि शुभाः पूर्णदृष्ट्या पश्येयुस्तदा रूपतुल्य दृग्बलं धनम्। यदि च चत्वारोऽपि पापाः पूर्णदृशा पश्येयुस्तदा रूपतुल्यं बलमृणं भवितुमर्हति। अत इष्टदृष्टियोगेनानुपाता यदि चतूरूपमितेन (४) सर्वदृष्टियोगेन रूपं (१) बलं लभ्यते तदेष्टदृष्टियोगेन किमिति $= \frac{१ \times दृष्टियो}{४}$ इति शुभदृष्टियोगचतुर्थांशो धनं पापदृष्टियोगचतुर्थांश ऋणं समुचितमेवेत्युपपन्नम् ॥१० + $\frac{१}{२}$॥

भा०—भौमादिक पाँच ग्रहों में यदि दो ग्रहों के राश्यंशादिक तुल्य हो तो युद्ध कहलाता है। जिन दो ग्रहों में युद्ध का लक्षण हो उन दोनों ग्रहों के षड्बलैक्यका अन्तर करके उसमें उन्हीं दोनों ग्रहों के शरान्तर करा से भाग देने से एब्धि युद्ध बल होता है। यह उत्तर दिशा में स्थित ग्रह के षड्बलैक्य में धन और दक्षिण दिशा में स्थित ग्रह के षड्बलैक्य में ऋण करे। तथा जिस ग्रह पर जितने शुभ ग्रह की दृष्टि हों उन दृष्टि योग के चतुर्थांश को जोड़े। और पापग्रह सम्बन्धि दृष्टियोग के चतुर्थांश घटावे तो ग्रहों का बल होता है। यहाँ युद्ध का लक्षण तथा शरसाधन उदाहरण चक्र ४३ के नीचे देखो ॥१० + $\frac{१}{२}$॥

उ० दी०—अत्र तात्कालग्रहाणां युद्धादिविचारस्तु ४३ चक्रसम्बन्धिगणपद्धर्शनेनैव सुगमाऽलमत्र लेखविस्तरेणेति।

अथ दृग्बलविचारः तत्र रव्युपरि चन्द्रगुरुबुधशनीनां क्रमात् दृष्टयः ००।३६।०३ ॥ ००।२५।३० ॥ ००।०८।३७ ॥ ००।४५।३५ अथ शुभानां चन्द्रगुरुबुधानां दृष्टियोगचतुर्थांशादस्मात् ००।१८।१७ पापस्य शनेर्दृक्चतुर्थांशं ००।११।४५ विशोध्य शेषं रवेर्दृग्बलम् ०० ०६।३३ एवमन्येषां द्र० ४२ चक्रम्।

अथ रवेः स्थानबलम् २।५५।५८ दिग्बलम् ००।०७।०८ कालबलम् १।०३।०४ निसर्गबलम् १।००।०० चेष्टाबलम् ००। ३३।५२ दृग्बलम् ००।६।३३ एवमैक्यं जातं रवेः षड्बलैक्यम् ५। ४६।२५ एवं चन्द्रादीनामपि ज्ञेयम् किं बहुविस्तरेणेति। द्र० ४३ चक्रम्।

अथ भावानां त्रिविधबलमाह—

**भावानां बलमीशजं च नृचतुष्पादाख्यकीटाम्बुजाः ॥११॥**
**जायाम्बाख्यखभोनिताः खलु ततो दिग्वीर्यवत्तद्युतं**
**सद्दृष्ट्यंङ्घ्रियुगुग्रदृष्टिचरणोनं ज्ञेज्यदृग्युक् पुनः ॥**

दशा०—भावानां तन्वादीनामीशजं ( स्वामिबलमित्यर्थः ) बलं स्यादित्येकम् । च ( पुनः ) नृचतुष्पादाख्यकीटाम्बुजा द्विपदचतुष्पदकीटजलचरसंज्ञकराशयो भावाः क्रमेण जायाम्बाख्यखभोनिताः सप्तमचतुर्थप्रथमदशमभावै रहिताः कार्या इत्यर्थः । ततो दिग्वीर्यवत् "रसभात् पुष्टं त्यजेच्चक्रतो दिग्वीर्यं रसहृत्" इति पूर्वोक्तवत् बलं साध्यं तद्द्वितीयं दिग्बलम् । तद्युतं तेन युतं स्वामिबलं कार्य्यम् तत् सद्दृष्ट्यङ्घ्रियुक् शुभग्रहदृष्टियोगचतुर्थांशयुतमुग्रग्रहदृष्टिचरणोनं पापग्रहदृष्टियोगचतुर्थांशोनं कार्य्यम् । पुनर्ज्ञेज्यदृग्युग् बुधगुरुदृष्टिभ्यां युक्तं कार्य्यम् । एवं स्वामिबलदिग्बलयोगो भावबलं भवतीति । भावानां द्विपदचतुष्पदादिसंज्ञा चोदाहरण ( ४६ ) चक्राधोलिखिता ॥११+½॥

अत्रोपपत्तिः—स्वामिनि बलवति सर्वे बलिनो, निर्बले च स्वामिनि सर्वे निर्बला भवन्तीति बालैरपि बुध्यतेऽतो भावा अपि स्वस्वस्वामिबलेन बलिनो भवितुमर्हन्तीति "भावानां बलमीशज" इति युक्तियुतमेवोदितम् । तथा "कण्टककेन्द्रचतुष्टयसंज्ञा सप्तमलग्नचतुर्थखभानाम् । तेषु यथाभिहितेषु बलाढ्याः कीटनराम्बुचराः पशवश्च ॥" इति वराहमिहिरोक्तेन नरराशयो लग्ने बलिनो भवन्ति । अर्थादेव लग्नतः परमान्तरिताः सप्तमभावे निर्बला भवन्ति । एतेन नरराशयो यथा यथा सप्तमभावान्तरितास्तथा तथा बलयुता भवन्ति । अत एव सप्तमभावनरराशिभावयोरन्तरतोऽनुपातेन भावदिग्बलसाधनं समुचितम् । यथा—यदि नरराशिभाव-सप्तमभावयोरन्तरेण षण्मितेन रूप बलं लभ्यते तदेष्टान्तरेण किमिति =

$\frac{(\text{नराभा सभा})\ १}{६}$ = नरराशिभावदिग्बलम् । एवमेव पूर्वोक्तवचनेनैव चतुष्पदभावादीनामपि दिग्बलानयनमुपपद्यते । पूर्वं ग्रहदिग्बलमप्येवमेवोक्तमतो "दिग्वीर्य्यवत्तद्" इत्युक्तम् । तथा च "अधिपयुतो दृष्टो वा बुधजीवयुतेक्षितश्च यो राशिः स भवति बलवान्"

इति वराहमिहिरोक्तेन बुधजीवदृष्टानां बलवत्त्वात् "ज्ञेज्यदृग्युक् पुनरित्युक्तम् ।" 'सद्दृष्टयड्घ्रियुगुग्रदृष्टिचरणोनम्'' इत्यस्योपपत्तिः प्रागेवाभिहितेति ॥११ + ½॥

भा०—अब भावोंके त्रिविध बल को कहते हैं—अपने अपने स्वामीका बल भावोंका प्रथम बल होता है। दूसरा दिग्बल जैसे—भाव नर राशि हो तो उसमें सप्तम भाव घटावे, यदि चतुष्पद हो तो चतुर्थ भाव को, यदि कीटराशि हो तो प्रथम ( तनु ) भावको, यदि जलचर राशि भाव हो तो उसमें दशमभावको घटाकर, अन्तर परसे ग्रहके दिग्बलके समान बल साधन करे ( अर्थात् यदि अन्तर ६ राशिसे अल्प हो तो उसीमें, ६ राशिसे अधिक हो तो १२ में घटाकर शेषमें ६ का भाग देनेसे जो लब्धि हो ) वह भावका दिग्बल होता है। इसको प्रथम ( स्वामिबल ) में जोड़े और उस भाव पर जितने शुभग्रहकी दृष्टि हों उनके योगके चतुर्थांश को उसमें जोडे, और जितने पाप ग्रहोंकी दृष्टि हो उसके योगके चतुर्थांशको घटावे, फिर उसमें यदि बुध बृहस्पतिकी दृष्टि हो तो उनकी सम्पूर्ण दृष्टिको जोडे। यह तीसरा भावका दृग्बल कहलाता है। इस प्रकार भावका स्पष्ट बल होता है ॥११ + ½॥ भावकी नृचतुष्पदादि संज्ञा उदाहरण ४६ चक्रके नीचे देखो ॥

उ० दी—भावानां बलमीशजमित्यत्र भावेशावगमक पद्यम्—

"कुजशुक्रज्ञेन्द्वर्कज्ञशुक्रकुजजीवसौरियमगुरवः। भेशा" इति

अनेन तनुभावस्वामी शुक्रस्तस्य बलम् ७। १२। ०१ इदमेव तनुभावबलमेव सर्वेषां भावानामिति द्र० ४४ चक्रम्। अथ नृचतुष्पदादिज्ञानम् ४६ चक्राधःस्थितपद्यावलोकनेनैव सुगमम्। अथ तनुभावस्तुलाराशिः स च नृसंज्ञकस्तेन तनुभावा ६। १८। ३४। ४६ दसात् जायाभाव ००। १८। ३४। ४६ मिमं विशोध्य शेषम् ६ ००। ०० इदं षड्भक्तं जातं तनुभावस्य रूपादिदिग्बलम् १। ००। ०० एवं सर्वेषां दिग्बलं साध्यम्। द्र० ४६ चक्रम्।

अथ पापानां तनुभावोपरिदृष्टयः--रदृ=००। २७। ११ मंद १। ००। ०० बुदृ ००। २४। २१ शदृ ००। ४४। ४७ आसां योगः २। ३६। १६ अस्य चतुर्थांशः ००। ३६। ०५ ऋणात्मकः। शुभग्रहाणां दृष्टयश्च सं.दृ ००। ००। ०० वृ दृ ००। २। ४५ शु.दृ ००। ०३। ३४ आसां योगः ००। ०६। १६ अस्य चतुर्थांशः ००। ०१। ३५ धनात्मक। अथ ऋणधनात्मकयोरन्तरमृणावशेषादृणम् ००।३५।३० इदं बुधगुरु

दृष्टियोगेना ००।२७।०६ नेन युक्तं तत्र "धनर्णयोरन्तरमेव योग" इत्यनेनान्तरम् ००।१०।२४ ऋणात्मकम्। एवं सर्वेषां भावानां दृग्बलं साध्यम्। द्र० ४५ चक्रम्।

अथ तनुभावस्य स्वामिबलम् ७।१२।०१ दिग्बलेनानेन १।००।०० युतम् ८।१२।०१। इदमृणात्मकेन दृग्बलेनानेन ००।१०।२४ हीनं जातं तनुभावस्पष्टबलम् ८।०१।३७। यत्र धनात्मकं दृग्बलं तत्र योज्यमिति। एवं सर्वेषां स्पष्टबलं साध्यम्। द्र० ४७ चक्रम्॥११+१॥

अथ कष्टेष्टसाधनार्थं चन्द्रार्कयोश्चेष्टाबलमाह—

**व्यर्केन्दुस्त्रिभयुक्तसायनरविश्चेष्टाख्यकेन्द्रे तयो-**
**र्गोकष्टेष्टविधौ बले कुरु ततः प्राग्वन्न वीर्याय ते॥१२॥**

व्या०—व्यर्केन्दुः त्रिभयुक्तसायनरविः क्रमेण तयोश्चन्द्रार्कयो-श्चेष्टाख्यकेन्द्रे स्याताम् (अर्कोनश्चन्द्रश्चन्द्रस्य चेष्टाकेन्द्रं; त्रिभयुक्त-सायनरविः सूर्यस्य चेष्टाकेन्द्रं भवतीत्यर्थः)। ततस्ताभ्यां चेष्टा-केन्द्राभ्यां गोकष्टेष्टविधौ (रश्मिकष्टेष्टसाधनार्थमित्यर्थः) प्राग् यन्त्रौमादिचेष्टाबलवत् तयोश्चन्द्रार्कयोर्बले कुरु। ते चन्द्रार्कचेष्टाबले वीर्याय न स्याताम् (बलैक्ये उपयोगिनी न भवेतामित्यर्थः)॥१२॥

अत्रोपपत्तिः— "उदगयने रविशीतमयूखौ वक्रसमागमगाः परिशेषाः।" इति वचनेन रवेः परमोत्तरगमने चेष्टाबलं परमं रूपमितं परमदक्षिणगमने च चेष्टाबलं शून्यमतः सायनमिथुनान्ते परमोत्तर-गमनाद् बलस्य परमत्वाच्चेष्टाकेन्द्रस्यापि परमत्वम्। सायनधनु-रन्ते च परमदक्षिणगमनत्वाच्चेष्टाबलस्य शून्यत्वाच्चेष्टाकेन्द्र-मपि शून्यं भवितुमर्हति तत्तु तत्र सायनरवौ राशित्रययोगेनैव भवति। ततश्च चेष्टाकेन्द्रप्रवृत्तिः। सायनमिथुनान्ते च चेष्टाकेन्द्रं षड्राशिसमं तदपि राशित्रययोगेनैव भवति। अत एवेष्टकालेऽपि त्रिभयुक्तसायन-रविस्तच्चेष्टाकेन्द्रं समुचितमेव। इदं चेष्टाकेन्द्रं स्थूलम्। वस्तुतो दक्षिणोत्तरगमनस्य क्रान्त्यधीनत्वात् क्रान्त्यनुपातेनैव चेष्टाबलं सूक्ष्मं भवितुमर्हतीति सुधीभिर्विभाव्यम्। अथ चन्द्रस्य चेष्टाकेन्द्रन्तु चेष्टारश्मिपरमत्वे परमं, चेष्टारश्मिशून्ये शून्यं भवितुमर्हति। तच्चा-मावास्यान्ते चन्द्रार्कयोरन्तराभावे चेष्टारश्म्यभावात् चेष्टा-केन्द्रस्याप्यभावः। पौर्णमास्यन्ते च चेष्टारश्मिपरमत्वे चेष्टाकेन्द्रमपि

परमं षड्राशिसमं भवितुमर्हति तत्तु स्पर्केन्दुनैव भवत्यत इष्टकालेऽपि स्पर्केन्दुस्तच्चेष्टाकेन्द्रं समुचितमेव । अन्यत् सर्वं कुजादिचेष्टाकेन्द्र-वत् सुगममेव । ततो भौमादिचेष्टाबलवदानीतं चन्द्रचेष्टाबलं पक्षबलतुल्यमेवातः षड्बलैक्यसाधनार्थं पूर्वमेव द्विगुणितं पक्षबलं गृहीतम् । रविचेष्टाबलं चायनबलतुल्यमतः पूर्वमेव द्विगुणित-मायनबलं कृतमतः केवलचेष्टारश्मिकष्टेष्टसाधनार्थमेवात्र बले साधिते न वीर्ययैति सर्वमेव निरवद्यम् ॥ १२ ॥

भा०—चन्द्रमा में सूर्य को घटाने से चन्द्रमा का चेष्टाकेन्द्र और सायन सूर्य में ३ राशि जोड़ने से सूर्य का चेष्टाकेन्द्र होता है । इससे पूर्वोक्त भौमादि चेष्टाबल के समान ( अर्थात् ६ राशि से अल्प हो तो उसी मे, यदि ६ राशि से अधिक हो तो १२ में घटाकर शेष में ६ का भाग देकर ) बल साधन करें, इस बल का चेष्टा रश्मि से कष्ट इष्ट साधन करने में उपयोग होता है । षड्बलैक्य में इसका उपयोग नहीं होता है ॥ १२ ॥

उ० दी—अथ चन्द्रः ७। ०१। ०४। १५ अस्माद्रवि १०। १२। ५७। ३८ विशोध्य शेषं चन्द्रस्य चेष्टाकेन्द्रम् ८। १८। ०६। ३७ सायनार्कः ११। ०३। २१। ३१ त्रिभयुतः २। ०३। २१। ३१ इदं रवेश्चेष्टाकेन्द्रम्। द० ४८ चक्रम्।

अथ चन्द्रस्य चेष्टाकेन्द्रं षड्भाधिकमतः चक्राद्विशोध्य शेषम् ३। ११। ५३। २३ इदं षड्भक्तं जातं चन्द्रस्य चेष्टाबलम् ००। ३३। ५८ अत्रापि भजनविधिरयनबलानयनवद्बोध्यः । एवं रवेरपि । कु० ४९ चक्रम् ॥ १२ ॥

ये चेष्टोच्चबले रसैर्विनिहते सैके निजा रश्मय-
श्चेष्टातुङ्गबलाहतेः पदमिहेष्टं स्याद्बलोनैकयोः ।
घातान्मूलमिदं हि कष्टमथ तद्रूपं दशायाः फलं
वीर्यं दृक् पृथगिष्टकष्टगुणिते द्वे चेष्टकष्टाह्वये ॥१३॥

व्या०—ये चेष्टोच्चबले पूर्वसाधिते रव्यादिग्रहाणां चेष्टाबलो-च्चबले ते रसैः षड्भिर्विनिहते गुणिते निजाः स्वकीया रश्मयः किरणा भवन्ति ( चेष्टाबलाच्चेष्टारश्मयः, उच्चबलादुच्चरश्मय इत्यर्थः ) । अथेष्टकष्टसाधनम्—इह चेष्टातुङ्गबलाहतेश्चेष्टाबलो-च्चबलघातात् पदं मूलं इष्टं स्यात् । तथा बलोनैकयोश्चेष्टाबलोन-

रूपतुल्यबलोनरूपयोर्घातान्मूलं (यत्) इदं कष्टं स्यात् हि (पादपूरणे)। अथानन्तरं दशाफलं निरूपयति—तद्रूपं इष्टकष्टानुरूपं दशायाः फलं ज्ञेयम् ( इष्टाधिक्ये शुभफलाधिक्यं कष्टाधिक्ये चाशुभफलाधिक्यं इष्टकष्टयोः साम्ये. शुभाशुभफलयोरपि साम्यमित्यर्थः ) वीर्यमिति ग्रहस्य वीर्यं षड्बलैक्यं, दृक् दृष्टिश्च द्वे पृथक् इष्टकष्टगुणिते ते इष्टकष्टाह्वये भवतः ( इष्टगुणितं बलमिष्टबलं, कष्टगुणितं च कष्टबलं तथेष्टगुणिता दृष्टिरिष्टदृष्टिः कष्टगुणिता च कष्टदृष्टिरित्यर्थः ) ॥ १३ ॥

अत्रोपपत्तिः—स्वकीयपरमोच्चस्थे ग्रहे परमाधिकाः सप्तमिताः, परमनीचस्थे परमाल्पो रूपमितो रश्मिः स्वीकृतः प्राचीनैः। तत्रोच्चसमे ग्रहे नीचग्रहान्तरं परमं षड्राशिमितं, नीचसमे ग्रहे नीचग्रहान्तरं शून्यमतो नीचग्रहान्तरादेव रश्मिसाधनं समुचितम्। अतोऽनुपातः—यदि षड्राशितुल्येन नीचग्रहान्तरेण षण्मिता रश्मिवृद्धिस्तदेष्टनीचग्रहान्तरेण किमिति लब्धेष्टरश्मिवृद्धिः $= \frac{6 \times (\text{ग्र}\backsim\text{नी})}{6}$

$= 6 \times$ उच्चबल* अनया नीचस्थानीयरूपमितो रश्मिर्युतो जाता इष्टोच्चरश्मयः $= 1 + 6 \times$ उच्चब०। एवं षड्भमिते चेष्टाकेन्द्रे सप्त चेष्टारश्मयः शून्ये चैको चेष्टारश्मिः। अतः पूर्ववदनुपातेनेष्टचेष्टारश्मिवृद्धिः $= \frac{6 \times \text{चेके}}{6} = 6 \times$ चेब † अतः इष्टचेष्टारश्मयः $= 1 + 6 \times$ चेब अतः उपपन्नं रश्म्यानयनम्।

अथेष्टकष्टोपपत्तिः—उच्चस्थे ग्रहे शुभफलं पूर्णं रूपमितमशुभफलं च शून्यं तत्रोच्चबलमपि पूर्णं रूपमितम्। नीचस्थे ग्रहे चाशुभफलं पूर्णं शुभफलाभावस्तत्रोच्चबलमपि शून्यम्। एवं षण्मिते चेष्टाकेन्द्रे शुभफलं पूर्णमशुभफलाभावस्तत्र चेष्टाबलमपि पूर्णं रूपमितं, शून्ये चेष्टाकेन्द्रेऽशुभफलं पूर्णं शुभफलाभावस्तत्र चेष्टाबलमपि शून्यमेव। एतेन यथा यथा चेष्टाच्चबलवृद्धिस्तथा तथा शुभफलवृद्धिरशुभफलह्रासः इति ज्ञानदृग्भिः परीक्षितमतश्चेष्टोच्चबलयोर्गत एव शुभाशुभरूपयोरिष्टकष्टयोः साधनं समुचितमतोऽ-

* यतो नीचग्रहान्तरं षड्भक्तमुच्चबलं भवति द्रष्टव्य श्लो० ५।

† षड्भक्तं चेष्टाकेन्द्रं चेष्टाबलं भवति द्रष्टव्य श्लो० १०।

नुपातो यदि परमोच्चचेष्टावलयोर्योगेन रूपद्वयेन शुभफलं पूर्णं रूपमितं लभ्यते तदेष्टचेष्टोच्चवलयोगेन किमितीष्टशुभम्= इष्टम्= $\frac{१\times(\text{चे व}+\text{उ व})}{२}$। तथेष्टशुभफलोनं रूप कष्टम्= $१-\frac{\text{चेव}+\text{उव}}{२}=\frac{१-\text{चेव}+१-\text{उव}}{२}$। अत्राचार्येण वलयोगार्धवलोनैक्योगार्धस्थाने तद्घातमूलं स्वल्पान्तरात् स्वीकृतं तद्यथा यदि चेव= उव तदा पूर्वानीतमिष्टम्= $\frac{\text{चेव}+\text{उव}}{२}=\frac{(\text{चेव}+\text{उव})\sqrt{\text{चेव}\times\text{उव}}}{२\times\sqrt{\text{चेव}\times\text{उव}}}$

$$=\frac{२\,\text{चेव}\sqrt{\text{चेव}\times\text{उव}}}{२\sqrt{\text{चेव}^{२}}}=\sqrt{\text{चेव}\times\text{उव}}$$

*वस्तुतो वलयोगार्धमेवेष्टम्, वलोनैक्योगार्धमेव कष्टं समुचितम्।* अत एव दैवज्ञदिवाकरेण प्रौढमनोरमायां 'अथवा वलयोगार्धमिष्टं तदूनं रूपं कष्टमिति निष्पन्नम्। मूलरूपेष्टकष्टन्तु पराशरादिमुनिमतविरुद्धत्वादयुक्तत्वादुपेक्ष्यमेवेति बोद्धव्यम्" इत्युक्तम्। किञ्च तद्बहुसम्मतत्वान्नाङ्गीकुर्वते साम्प्रतिका इति।

तथा ग्रहस्य शुभफलं शुभवलशुभदृष्टिवशादेवं चाशुभबलाशुभदृष्टिवशादशुभफलं भवितुमर्हत्यत एवेष्टकष्टाभ्यां पृथग् दृग्बले गुणिते तद्द्वये कृते इत्यपि समुचितमेवेत्युपपन्नं सर्वम् ॥१३॥

भा०—पूर्व साधित चेष्टावल को ६ से गुना करके १ एक जोड़ने से चेष्टारश्मि, तथा उच्चबल को ६ से गुना करके १ जोड़ने से उच्चरश्मि होता है। चेष्टाबल को उच्चबल से गुना कर उसका मूल इष्ट होता है। तथा चेष्टाबल को एक १ में घटावे और उच्चबल को १ में घटाकर दोनों का घात करके गुणनफल का मूल कष्ट होता है। और इष्ट कष्ट के अनुरूप ही ग्रहों का दशाफल होता है (अर्थात् इष्ट अधिक हो तो शुभ फल की अधिकता और कष्ट अधिक हो तो अशुभ फल की अधिकता यदि इष्ट कष्ट तुल्य हो तो शुभाशुभ भी तुल्य ही होता है) ग्रहों के षड्बलैक्य को इष्ट से गुना करने से इष्टबल और कष्ट से गुना करने से कष्टबल होता है। और इष्ट से दृष्टि को गुना करने से इष्ट दृष्टि तथा कष्ट से गुना करने से कष्ट दृष्टि होती है ॥ १३ ॥

उ०दी—रवेश्चेष्टावलम् ००।२१।०७ इदं षड्भिर्गुणितम् २।०६।४२ सैकम् ३।०६।४२। अत्र चेष्टोच्चबलानयने त्यक्तान्तिमावयव गृहीत्वा यदि षड्भिर्गुण्यते तदान्तिमावयवो रूपाधिको भवत्यतो

रवेश्चेष्टारस्मयः—३ । ०६ । ४३ एवं सर्वेषां चेष्टोच्चबलानि त्यक्तान्ति मावयवसहितान्येव षड्भिर्गुण्यानीति दिक् । द्र० ५० चक्रम् । एवं रवेरुच्चबले षड्भिर्गुणिते सैके चोच्चरश्मयो जाताः ५ । ५ । ५५ एवं सर्वेषाम् । द्र० ५१ चक्रम् ।

अथ ५२ । ५३ चक्रस्थफलानयनं तच्चक्राधःस्थितगाथावलोकनेनैव स्पष्टं भवति ।

अथ रवेरुच्चबलम् ०० । ४० । ५६ चेष्टाबलम् ०० । २१ । ०७ अनयोर्गोमूत्रिकया घातः ०० । १४ । २५ गोमूत्रिकागुणनविधिः ५४ चक्राधो गद्ये द्रष्टव्यः । एवमन्येषामपि चेष्टोच्चबलघातः कार्य्यः । द्र० ५४ चक्रम् । रवेश्चेष्टोच्चबलोनैकघातो यथा—( १—( ०० । २१ । ०७ ) ) × ( १—( ०० । ४० । ५६ ) ) = ( ०० । ३८ । ५३ ) × ( ०० । १६ । १ ) = ०० । १२ । १६ अत्रापि गुणनविधिर्गोमूत्रिकयैव कार्यः । एवमन्येषामपि । द्र० ५५ चक्रम् ।

अथेष्टसाधनम्—तत्र रवेश्चेष्टोच्चबलघातस्या ०० । १४ । २५ स्य मूलं "षष्टिवर्गगुणादङ्का"दित्यादिना ( ०० । १४ । २५ ) × ३६०० = ०० । ५०४०० । ६०००० षष्ट्या सवर्णिते = ८६५ । ०० । ०० एतन्मूलम् २९ शेषम् २४ सैकम् २५ षष्टिगुणम् १५०० इदं द्विनिघ्नेन द्वियुक्तेन मूलेना २९ × २ + २ = ६० नेन भक्तम् २५ प्रथमागतमूले विकलास्थाने युक्तमस्याग्रिमावयवरूपमतो २९ । २५ इदं षष्टिभक्तं जातं मूलम् ००।२९।२५ इदमेव रवेरिष्टम् । एवं चन्द्रादीनामपि । द्र० ५६ चक्रम् । एवं चेष्टोच्चबलोनैकघातमूलं कष्टं भवति । द्र० ५७ चक्रम् । अथ रवेरिष्टम् ००।२९।२५ रवेः षड्बलैक्यम् ५।४६। २५ गोमूत्रिकयानयोर्घात इष्टघ्नषड्बलैक्यं जातम् २।४९।५० एवं कष्टघ्नषड्बलैक्यमपि । द्र० ५८ - ५९ चक्रे । एवमिष्टकष्टाभ्यां ग्रहाणां भावानां च दृष्ट्यः पृथक् गुणिताः स्वस्वेष्टकष्टघ्नदृष्ट्यो भवन्ति ( द्र० ६०—६१-६२-६३ चक्राणि ) ॥१३॥

अथ सप्तवर्गशुभाशुभनिर्णयार्थं सप्तवर्गेष्टकष्टसाधनमाह—

स्वोच्चे रूपं त्रिकोणे चरणविरहितं स्वर्क्षगेऽर्धं त्रयोष्टांशाश्चाधीष्टर्क्षे इष्टर्क्षयुजि च चरणः स्यात्समर्क्षेऽष्टमांशः
भूपांशो वैरिगेहेऽध्यरिभयुजि रदांशश्च नीचे खमीशाद्दिष्टं गेहे तदूनैकमसदथ दलं षट्सु कार्यं तदैक्ये ॥१४॥

पंक्त्योः ससुकोष्ठयोः प्रथमयोरिष्टासदैक्ये कृतासे
स्थाप्ये भदलादिषट्सु च तदर्धे वर्गपानां पृथक्।
कृत्वोक्त्या सदसद्युती निजनिजे तन्निघ्न इष्टाशुभे*
वर्गेट्तत्स्थखगौजसोः सदसतोर्घातात्पदघ्ने स्फुटे॥१५॥

व्या०—स्वोच्चे † स्वकीयोच्चराशौ ग्रहे रूपं (१) बलं, त्रिकोणे स्वमूलत्रिकोणे चरणविरहितं पादोनं रूपं, स्वर्क्षे स्वराशिस्थेऽर्धं रूपार्धं, अधीष्टर्क्षेऽधिमित्रगृहे त्र्योष्टांशास्त्रिगुणिताष्टमांशः, इष्टर्क्षयुजि मित्रराशिस्थे च चरणश्चतुर्थांशो बलं, समर्क्षे समराशौ चाष्टमांशः, वैरिगेहे शत्रुराशौ भूपांशो रूपषोडशांशः, अध्यरिभयुजि अधिशत्रुराशिगते रदांशो रूपद्वात्रिंशद्भागः, नीचे स्वनीचराशौ खं शून्यं बलं भवति। ईशाद् गृहेशवशादिष्टं शुभं गेहे गृहे स्यात् तदूनेऽमिष्टोनं रूपं गृहेऽसत् कष्टं स्यात्। अथानन्तर षट्सु होरादिषड्वर्गेषु दल गृहवदागतशुभाशुभयोरर्धं स्थाप्यम्। तदैक्ये कार्ये, सप्तस्थानस्थितानां चैक्यं कार्यमित्यर्थः। पंक्त्योरिति—ससुकोष्ठयोः (सप्तगृह-होरादिकाः सुकोष्ठा विद्यन्ते ययोस्ते ससुकोष्ठे तयोः) पङ्क्त्योः शुभाशुभपंक्त्योः प्रथमयोर्गृहस्थानीयकोष्ठयोरिष्टासदैक्ये शुभाशुभैक्ये कृतासे चतुर्भक्ते स्थाप्ये (इष्टैक्यं चतुर्भक्तं शुभपंक्तिगृहकोष्ठे, कष्टैक्यं चतुर्भक्तमशुभपंक्तिगृहकोष्ठे स्थाप्यमित्यर्थः)। भदलादिषु होरादिषु षड्वर्गेषु च तदर्धे गृहस्थापितशुभाशुभयोरर्धे दले स्थाप्ये। वर्गपानां गृहादिसप्तवर्गेशानां, पृथक् पृथक् उक्त्या पूर्वोक्तयुक्त्या सदसद्युती शुभाशुभयोगौ कृत्वा तन्निघ्ने तद्गुणिते निजनिजे इष्टाशुभे कार्ये ते मध्यमे शुभाशुभे ज्ञेये। ते च वर्गेट्तत्स्थखगौजसो सदसतोर्घाता

* अत्र 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति नियमात् 'तन्निघ्ने इष्टाशुभे' इत्येव पाठो भवितुमर्हति तथा च च्छन्दोभङ्गदोषत्वात् 'तन्निघ्न इष्टाशुभे' इत्येव पाठ आचार्येण रचितः "अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेदित्युक्तेः। किंवात्र तद्घ्ने त्वभीष्टाशुभे" एव पाठो निर्विवाद इति।

† "वर्गेशो स्वोच्चादिगामिनि स्यादिक बल प्राक्तम्" एव केषांचिद् व्याख्यान सम्प्रदाया नुरोधं तत्री कुर्वते मैथिलादिका इति। तथा च यत्र स्वोच्च स्वनीच स्वमूल त्रकोण भवेद् तत्र स्वोच्चादिजबलमेव ग्राह्य, न मित्रादिजम्। विशेषार्थमुदाहरणं विलोकनीयम्।

त्पदग्रे वर्गेशवर्गस्थग्रहशुभाशुभबलेनयघातमूलगुणिते स्फुटे स्पष्टे शुभाशुभे भवतः॥ १४—१५॥

अत्रोपपत्तिः—नीचे खमित्यन्तस्य युक्तिः पूर्वमेव पञ्चमश्लोकोपपत्तौ प्रदर्शिता। अथेशादिष्टमित्यादेरुपपत्तिः—शुभाशुभफलयोर्योगस्य रूप ( १ ) समत्वात् स्वामिवशाद् यद् गृहे शुभं तदूनं रूपं गृहेऽशुभं भवितुमर्हत्येव। तथा च "प्रधानता राशिफलस्य नूनं होरादिवर्गाद् द्विगुणं गृहं यत्" इति प्राचीनोक्त्या होराद्यपेक्षया गृहस्य द्विगुणत्वाद् गृहस्थापितस्य फलस्य दलं होरादिषु स्थापनीयमित्यपि समुचितमेवेत्युपपन्नं "दलं षट्सु" इत्यन्तम्। तथा चाग्रे वर्गेशशुभाशुभयोगेन गुणनीयमस्त्यतः "कार्ये तदैक्ये" इति योगकरणमपि साध्वेव।

अथ तद्गृहादिफलैक्यं चतुर्गुणितगृहफलसमं यतो गृहफलार्धं षड्गुणितं गृहफ $\frac{६}{२}$ = गृहफ ३ होरादिषु षड्वर्गेषु वर्तते तद् गृहफलसहितं पूर्वोक्तैक्यम् = ऐक्यम् = गृहफ × ४ ∴ $\frac{\text{ऐक्यं}}{४}$ = गृहफ। अत एव शुभाशुभपंक्त्योः प्रथमयोरिष्टासदैक्ये कृताप्ते स्थाप्ये" इत्युक्तम्। होरादिषु त्वर्धं पूर्वोक्तयुक्त्यैवात्रापि समुचितम्। तथा च भावपतौ बलयुक्ते भावस्थग्रहफलं सकलं भवितुमर्हत्यत एव वर्गपस्य सदसदैक्याभ्यां निजनिजे इष्टाशुभे गुणिते ते मध्यमशुभाशुभत्वेन गृहीते। एवं वर्गेशवर्गस्थशुभाशुभबलवशादेव तत्फलस्य स्फुटता स्यादतोऽनुपातो—यदि वर्गस्थवर्गेशग्रहयोः परमशुभाशुभबलयोगेन रूपद्वयेन ( २ ) सम्पूर्णं फलं रूपमितं ( १ ) लभ्यते तदेष्टवर्गस्थवर्गेशयोः शुभाशुभबलयोगेन किमितीष्टबलयोगानुपातेन शुफ=

$१ \times \frac{(\text{वस्थशुर} + \text{वर्गेशशुब})}{२} = \sqrt{\text{वर्गस्थशुब} \times \text{वर्गेशशुब}}$। एवमशुभबलयोगानुपातेन अशुभफ $= \frac{१ \times (\text{वर्गस्थअशुब} + \text{वर्गेशअशुब})}{२}$

$= \sqrt{\text{वर्गस्थअशुब} \times \text{वर्गेशअशुब}}$ इति पूर्वदर्शितयुक्त्या सिद्ध्यति। अतः आभ्यां गुणिते पूर्वोक्तशुभाशुभे स्फुटे भवितुमर्हतः। अत्र "समयोः समगुणनादौ समत्वं, विषमयोः समगुणनादौ विषमत्वमेवे" ति नियमात् इष्टाधिक्ये घातमूलगुणनेऽप्याधिक्यमेव; कष्टाधिक्ये घातमूलगुणनेऽपि तदाधिक्यमेवेत्यलं विस्तरेण॥ १४-१५॥

भा०—ग्रह अपनी उच्चराशिमें हो तो रूप (१) स्वमूलत्रिकोण में तीन चरण ( ०।४५ ), स्वराशि में आधा ( दो चरण ० ३० ) अधिमित्र की राशि में त्रिगुणित अष्टमांश (०।२२।३०), मित्र की राशि में षोडशांश (०।३।४५), अधिशत्रु की राशि में बत्तीसवाँ भाग (०।१।५२) और नीच राशि में शून्य बल होता है। इस प्रकार वर्गेश के वश से जो बल आवे वह गृहस्थान का शुभ बल होता है। उसको एक में घटाकर गृहस्थान का अशुभ बल होता है। एवं होरादि षड्वर्ग में गृहवत् जो बल आवे उसका आधा स्थापन करे। फिर उन सबों (सप्तवर्गस्थबलों) का योग करे ॥१४॥ अनन्तर सात सात कोष्टक के शुभ, अशुभ दो पंक्ति लिखकर शुभ पंक्ति के प्रथम ( गृहकोष्टक ) में उपरोक्त शुभैक्य का चतुर्थांश और अशुभ पंक्ति के प्रथम ( गृहकोष्टक ) में अशुभैक्य का चतुर्थांश स्थापन करे। होरादिक षड्वर्ग में गृहस्थापित फल का आधा लिखे। फिर वर्गेशों के पृथक् २ शुभाशुभ के योग करके उससे पृथक् इष्ट कष्ट को गुना करे तो मध्यम शुभाशुभ होता है। फिर वर्गेश तथा वर्गस्थ दोनों ग्रहों को शुभाशुभ के घात के मूल से गुना करने से स्पष्ट शुभाशुभ होता है ॥ १५ ॥

विशेष–जो राशि स्वोच और मूल त्रिकोण तथा स्वगृह तीनों होता हो यथा कन्या बुध का, अथवा स्वगृह और मूल त्रिकोण दो होता हो वहाँ किस प्रकार बल लेना चाहिये, इस विषय में उदाहरण चक्र में २७ चक्र के नीचे सारावली के वचन देखो।

उ० दी०–रविरधिशत्रुगृहेऽतो रूपस्य द्वात्रिंशद्भागो गृहशुभम् ००।०१।५२। अथ होरादिषड्वर्गेषु गृहवच्छुभमानीय तदर्धं स्वस्य शुभं स्यात्। यथा—रविः स्वहोरायां तेन गृहवत् शुभम् ००।३०।०० एतदर्धं होराशुभम् ००।१५।०० एवं रविः शत्रुद्रेष्काणे तेन गृहवत्षोडशांशशुभम् ००।०३।४५ एतदर्धं द्रेष्काणशुभम् ००।०१।५२ एवं रविः समसप्तमांशे तेन गृहवदष्टमांशशुभम् ००।०७।३० एतदर्धं सप्तमांशशुभम् ००।०३।४५ एवं रविरधिशत्रुनवमांशे तेन गृहवद्द्वात्रिंशांशशुभम् ००।१।५२ एतदर्धं नवमांशशुभम् ००।००।५६ एवं रविरधिमित्रद्वादशांशे तेन गृहवत् शुभं त्रिगुणितोऽष्टांशः ००।२२।३० अस्यार्धं द्वादशांशशुभम् ००।११।१५ एवं रविरधिमित्रत्रिंशांशेऽतः गृहवच्छुभं तथैव त्रिगुणितोऽष्टमांश ००।२२।३० एतदर्धं त्रिंशांशशुभम ००।११।१५। अथ सर्वशुभयोगः ००।४५।५५ एवं चन्द्रादीनामपि ( द्र० ६४ चक्रम् ) अथ स्वस्वगृहवत् शुभोनरूपमशुभं स्यात्। परमत्र होरादिषड्वर्गेषु तद्दलमेवाशुभं भवति। द्र० ६५ चक्रम्।

अथ रवेर्गृहादिशुभानां योगः ००।४५।५५ अस्य चतुर्थांशो रवेर्गृ-

ह्शुभपंक्तिः ००।११।२६ अस्यार्धं होरादिकोष्टेषु ज्ञेयम्। एवं चन्द्रादीनामपि ( द्र० ६६ चक्रम् ) एवमेवाशुभपंक्तयोपि ज्ञेयाः ( द्र० ६७ चक्रम् )।

अथ रविः शनिगृहेऽत. शनेः शुभयोगेना ००।३७।२६ नेन रवेर्गृहशुभपंक्ति ००।११।२६ गोमूत्रिकया गुणिता जाता ००।०७।१० इदं वर्गेशशुभयुतिगुणितशुभपंक्तिचक्रे रवेर्गृहफलम्। एवं रविः स्वहोरायां वर्त्तते तेन स्वस्यैव शुभयोगेना ००।४५।५५ नेन स्वहोरा शुभपंक्तिः ००।८५।४४ गुणिता जाता ००।०४।२३ इदं रवेर्होरेशशुभ युतिगुणितशुभहोरापंक्ति फलम्। एवं द्रेष्काणादयोपि तथैव चन्द्रादीनामपि ( द्र० ६८ चक्रम् )।

एवं वर्गेशाशुभयोगेनाशुभपंक्तिरपि सङ्गुण्या। द्र० ६९ चक्रम् अथ गृहेशतत्स्थग्रहयो. शनिसूर्य्ययोरिष्टघ्नपड्वलैक्ययो ०४।०२ २२॥ २।४६।५० रनयोर्घातः ११।१६।०२ एवं होरादावपि तथा चन्द्रादीनामपि। द्र० ७० चक्रम्। एवं वर्गेशतत्स्थग्रहयोः कष्टघ्नपड्वलैक्ययोर्घातोपि ज्ञेयः ( द्र० ७१ चक्रम् )।

अथ ७०–७१ चक्रस्फलानां मूलानि ग्राह्यानि। अत्र मूलानयन प्रकारः पूर्वोक्त एव बोध्यः ( द्रष्टव्ये ७२-७३ चक्रे )।

अथ रवेर्वर्गेशशुभयोगगुणितमिष्टम् ( शुभपंकिः ) ००।०७।१० इद वर्गेशतत्स्थग्रहयो ( शनिसूर्य्ययो. ) रिष्टघ्नपड्वलैक्ययोर्घातमूलेनानेन ३।२२।।३ गुणितं जात रवेर्गृहे स्पष्टशुभम् ००।२४।१४। एवं होरादीनां तथा चन्द्रादीनामपि ज्ञेयम् ( द्र० ७४ चक्रम् )।

एवं स्वस्ववर्गेशाशुभयुतिगुणितशुभपंक्तेः वर्गेशतत्स्थग्रहयोः कष्टघ्नपड्वलैक्ययोर्घातमूलस्य च घातः स्फुटाशुभं भवति ( द्र० ७५ चक्रम् )॥१४ १५॥

अथ योगजायुर्दायस्यामितायुर्दायस्योदाहरणप्रदर्शनपूर्वकमंशायुस्साधनार्थं चेष्टागुणकादिकमाह –

कर्कान्द्विजयुनोदये बुधसितौ केन्द्रे ऽपरीशेतरै-
रायुर्विंद्व्यमितं हि योगजमिहान्यत्रोच्यतेऽथोन्मितम्।
अपलपाश्चेत् किरणाः सरूपकिरणाङ्घ्रिश्चेत्त्रयोर्ध्वा विभू-
गोऽर्धं चैष्टिकतुङ्गसम्भवगुणौ तद्घातमूलं स्फुटः ॥१६॥

व्या० कर्कीन्द्रिज्ययुतोदये चन्द्रगुरुसहिते कर्कलग्ने बुधसितौ बुधशुक्रौ केन्द्रे स्थितौ यदि भवतस्तथा ऽपरीशेतरैस्तृतीयषष्ठैक द शेषितरै सूर्यकुजशनैश्चरैरिहास्मिन् योगेऽमितमायुर्विद्धि जानीहि। अन्यत्र अन्थान्तरे योगजमायुर्विद्धि। अथास्मिन् ग्रन्थे उन्मित गणितागतमायुरुच्यते। अथ चेष्टोच्चगुणकावाह—"परा इति। चेद् यदि किरणा पूर्वोक्त चेष्टोच्चरश्मयस्त्रयास्त्रयूनास्तदा सरूप किरणार्धं। चेत्त्रयोर्ध्वास्त्र्यधिकास्तदा विभूगोऽर्धं रूपोनकिरणार्धं चैष्टिकतुगसम्भवगुणौ भवत। (चेष्टरश्मितश्चेष्टागुणक उच्चर श्मित उच्चगुणक इति)। तद्घातमूल तयाश्चेष्टोच्चगुणकयोर्घात मूल स्फुट स्फुटगुणको भवतीति ॥१६॥

अत्रोपपत्ति —अमितायु प्रमाणे वृद्धवाक्यमेव प्रमाणम्। चेष्टो च्चगुणकोपपत्ति — 'शत्रुक्षेत्रे यश नीचेऽर्धं सूर्यलुप्तकिरणाश्च। क्षप यन्ति स्वाद्वायाश्चास्त यातौ रविजशुक्रौ'॥ तथा वक्रोच्चयास्त्रिगुणितं" इति लघुजातकोक्त्या त्र्यंशायुषि परमोच्चे त्रितय गुण परमनीचेऽर्ध हानि। तथा परमोच्चे सप्तकिरणा नीचे रूपमिता रश्मि। नीचादग्रे यत्रैकरश्मितुल्योपचयस्तत्र हान्यभावो यत्र रश्मिद्वयतुल्योपचयस्त त्रार्धं गुणोपचयोत एवानुपातो-यदि रश्मिद्वय रूपार्धं गुणस्तदा रूपोनकिरणै क इति $१ \times \frac{(कि-१)}{२} = \frac{(कि-१)}{४}$ एतेन रूपा

र्धमितगुणो युत इष्टगुण $= \frac{(कि-१)}{४} + \frac{१}{२} = \frac{(कि+१)}{४}$ इति

रश्मित्रयाल्पे। रश्मित्रयाधिकेत्वन्योऽनुपातो — यदि रश्मित्रया धिकैश्चतुर्मितैर्द्विमितौ गुणस्तदेष्टै किरणत्रयोनकिरणै क इति $२ \times \frac{(कि-३)}{४} = \frac{(कि-३)}{२}$ अनेन फलेनैकमितो गुणो युतो जात इष्ट

गुण $= १ + \frac{कि-३}{२} = \frac{कि-१}{२}$। एव परमवक्रस्थानेऽपि ज्ञेयम्। घात मूलस्य स्फुटता पूर्वोक्त्या स्पष्टेति ॥१६॥

भा०—जन्म समय में चन्द्रगुरुयुत कर्क लग्न हो तथा बुध शुक्र केन्द्र (१।४।७।१०) स्थान में हो इतर ग्रह (सूर्य मंगल शनि) तृतीय षष्ठ एकादश (३।६।११) स्थान में हो तो अमित आयु समझना। और योग सम्बन्धि आयु ग्रन्थान्तर से समझना। इस ग्रन्थ में केवल गणितागत आयुर्दाय कहता हूँ।

चेष्टा उच्च गुणक साधन—पूर्वसाधित रश्मि ३ तीन से अल्प हो तो रश्मि में १ एक जोड़कर उसका चतुर्थांश करना, यदि ३ से अधिक हो तो रश्मि में १ घटा-कर उसका आधा करना तो गुणक ( अर्थात् चेष्टारश्मि पर से चेष्टा गुणक और उच्च रश्मि से उच्च गुणक ) होता है। फिर दोनों गुणक का घात करके मूल लेना वह स्फुट गुणक होता है ॥ १६ ॥ विशेष उदाहरण चक्र में देखो।

उ०दी—रवेश्चेष्टारश्मयः ३।०६।४३ त्र्यधिकत्वाद्विरूपाः २। ०६।४३ एतदर्धम् १।०३।२१ अयं रवेश्चेष्टागुणकः। अथ भौमस्य चेष्टारश्मयो २।४३।२१ त्र्यल्पास्तेन रूपयुताः ३।४३।२१ एतच्चतु-र्थांशः ००।५५।५० अयं भौमस्य चेष्टागुणकः। एवमुच्चरश्मित उच्चगुणकः साध्यः ( द्र० ७६।७७ चक्रे ) अथ उच्चगुणकचेष्टागुणकयोर्घातमूलं स्फुटगुणक इति पूर्वप्रकारेणैव सुगमः। द्र० ७८ चक्रम् ॥१६॥ @

---

@ अथात्र प्रसङ्गाद् मङ्गलायां सप्तवर्गजगुणकचक्रं श्रीपतिप्रकारेण लिखितमुदाहरण-कर्ता तदानयनप्रकारस्तु—

"वर्गोत्तमे स्वभवने स्वनवांशके च स्वत्र्यंशके च गुणको द्वितयं निरुक्तः।
अध्यर्धरूपमधिमित्रगृहे सुहृद्रे मन्त्र्यंशके समगृहे खलु रूपमेव ॥१॥
त्र्यंशोनितं रिपुगृहेऽप्यरिभे दलं स्यादेभ्यो गुणो भवति यः खलु कश्चिदेकः।
वेदोद्धृतः स भगुणो गणकैर्निरुक्तो होरादिवर्गगुणकस्तु भवेत्तदर्धम् ॥२॥"

अथ रविरधिशत्रुगृहे तेन दलम् $\frac{1}{2}$ वेदोद्धृतम् $\frac{1}{8}$ अयं रविगृहे गुणकः। अथ गृहगुण-कस्य $\frac{1}{8}$ स्य दलम् $\frac{1}{16}$ अयं होरादिवर्गगुणकः स्यादिति। अथात्रान्योऽपि विशेषः—

"नगांशका रुद्रमिता अभीष्टराशौ सुहृद्वेश्मनि मूर्च्छनांशाः।
नवाश्विनो रूपमुदासराशौ सुद्व्यंशका विश्वमिता द्विषद्भे ॥१॥
अयो नगांशा अधिशत्रुराशावेते भसंज्ञा निजराशिवर्जम्।
वर्गोत्तमात्मीयनवांशकद्वय् स्थिते ग्रहे तु द्वितयं गुणः स्यात्" ॥२॥

अथ चन्द्रस्य स्वनवांशके स्थितत्वात् रूपद्वयं चतुर्भक्तम् $\frac{2}{4}=\frac{1}{2}$ गृहगुणः। परं गृह-गुणः भसंज्ञगुणेना $\frac{3}{2}$ नेन गुणितः $\frac{3}{4}$ अयं चन्द्रगृहे गुणकः। परमत्र गृहगुणस्य $\frac{3}{4}$ स्य दलम् $\frac{3}{8}$ अयं होरादीनं गुणकः। नात्र भसंज्ञगुणितं कार्यम्। एवं कुजादीनां साध्यः ( द्र० ७९ चक्रम् )

अथ मङ्गलायां कृतवर्गजानन्तरताडकचक्रानयनार्थं तु—

"गृहादिके वर्गगणे स्वकीये द्विको गुणस्त्वंशविवर्जितः सः।
अभीष्टभे मित्रगृहे नवांशा विधे च रूपं च समस्य गेहे ॥१॥

अथाश्रयगुणमाह—

यः स्वाधीष्टसुहृत्समार्यधिरिपोर्वर्गे धृतिश्चेष्विला-
विश्वाङ्केषुगुणा गृहे द्विगुणिता योगः क्रमात्तं हरेत्।
तद्वे षड्वसुगोऽशुमद्धृतिजिनैः षड्भिश्च वर्गोत्तम-
स्वांशत्र्यंशगते सदा रसगुणैः स्यादाश्रयाख्यो गुणः॥१७॥

व्या०—यो ग्रहः स्वाधीष्टसुहृत्समार्यधिरिपोर्वर्गे गृहादिसप्तवर्गे स्थितस्तस्य क्रमात् धृतिः, इष्विलाविश्वांकेषुगुणा (अर्थात् स्वगृहे धृतिः १८, अधीष्टभे इष्विलाः १५ मित्रभे विश्वे १३, समभे अङ्काः ६, अरिभे इषवः ५, अधिशत्रुभे गुणाः ३) अङ्काः (गृहादिसप्तवर्गेषु) स्थाप्याः। तत्र गृहे गृहवर्गे द्विगुणिताः स्थाप्या होरादौ यथा पठितांश्च एवेति। यथा स्वगृहे षट्त्रिंशत्, स्वहोरादावष्टादशै (१८) च। एवं अधिमित्रगृहे त्रिंशत् (३०) अधिमित्रहोरादौ पञ्चदश (१५) वे-इत्यादि ज्ञेयम्) एवं सप्तवर्गेस्थापिताङ्कानां योगः कार्यस्तं योगं तद्वे तेषां स्वाधीष्टसुहृत्समादीनां मे गृहे ग्रहे सति क्रमात् षड्वसुगोऽशुमद्धृतिजिनैः षड्भिः षड्गुणितैर्हरेत् (अर्थात् स्वगृहे षड्गुणित-

नवांशका पञ्च विरोधिराशौ गुणांशका स्यादधिवैरिणो भे।
पूर्वं क्रमपूर्वां गुणका य उक्ता वर्गेषु सप्तस्विह गुणयसंज्ञा॥२॥
गुण्या गुणै स्वैरधिकारलब्धैस्तैर्युता स्व दश मिश्रितैस्तै।
स्मृतो बुधैराश्रयसंज्ञितोय मिति॥

अथ रविरधिरात्रुगृहे गुणांशकः ३/६ अथ रविगृहे गुणः। स्वहोरायां दशम् २। शत्रुद्रेष्काणे नवांशकः पञ्च ५/६। समसप्तमांशे द्वयम् १। अधिशत्रुनवमांशे गुणांशका ३/६। अधीष्टद्वादशांशे तथाधीष्टत्रिंशांशे च त्र्यंशविवर्जितद्वयम् ५/३। एव चन्द्रादीनामपि ज्ञेयम् (द्र० ८० चक्रम्)।

अथात्र च रवेर्गृहगुणक ११/८ अथमनन्तरतादिकगृहगुणदेना ३/६ नेनांशाहमिरदेदवधेन मत्तेत्यादिना गुणित २१/४ अथ रविगृहे माश्रयगुणक। एव होरादयोऽपि तथा चन्द्रादीनामपि च। द्र० ८१ चक्रम्॥

अथ रवेर्गृहाश्रयगुणक २१/४ अमेऽदमनेन २४ भक्त लब्धम् ०० शेष १ षष्ट्या सगुण्यात्ते २४ न भक्तं लब्धम् २ पुनः शेषम् १२ षष्ट्या सगुण्य ७२० चतुर्विंशत्या भक्तं लब्धम् ३० अतः क्रमाल्लब्धान्यङ्केन ०। २। ३० एव होरादावन्यादयोऽपि रविमाश्रा-श्रयाश्रयगुणकः (द्र० ८२ चक्रम्)।

षड्भिः ३६, अधिमित्रगृहे षड्घ्नवसुभिः ४८, मित्रगृहे षड्गुणितनवभिः ५४, समराशौ षड्गुणितद्वादशभिः ७२, शत्रुभे षड्घ्नधृतिभिः १०८, अधिशत्रुभे षड्गुणितजिनैः १४४ भजेदिति)। च (तथा) वर्गोत्तमस्वांशत्र्यंशगते ग्रहे सति सदा रसगुणैः षट्त्रिंशता तं योगं भजेत् लब्धिराश्रयाख्यो गुणः स्यात् ॥१७॥

अत्रोपपत्तिः—अत्र गृहादिसप्तवर्गेषु होरादयः षड्वर्गास्तुल्यभागा एव। तथा "होरादिवर्गाद् द्विगुणं गृहं यत्" इति यवनवचनेन राशेर्द्विगुणत्वादष्टौ वर्गास्तेनाष्टभक्तो गुणो होरादिवर्गेषु भवितुमर्हति। तथा गृहस्थाने द्विगुणिताष्टमांशः $\frac{१\times२}{८}=\frac{१}{४}$ स्थाप्यः। अथ-"वर्गोत्तमे स्वभवने स्वनवांशके च स्वत्र्यंशके च गुणको द्वितयं निरुक्तः" ※ इत्यादिश्रीपतिवचनेन स्वभवने गुणः २ पूर्वोक्त्याऽष्टभक्तः $=\frac{२}{८}$ तथायं "गृहादिके वर्गगणे स्वकीये द्विको गुणः......+इत्याद्युक्त्या द्विगुणितः $\frac{४}{८}=\frac{१८}{३६}$=स्वहोरादौ गुणः। तथा" "वर्गोत्तमे स्वभवने" इत्यादिनाऽधिमित्रगृहे गुणः $\frac{३}{२}$ अष्टभक्तः $\frac{३}{१६}$ अयं "गृहादिके वर्गगणे स्वकीये" इत्यादिनाऽधिमित्रगुणकेन $\frac{५}{३}$ अनेन गुणितः $\frac{१५}{४८}$= अधिमित्रहोरादिगुणकः। एवं मित्रगृहे गुणः १ अष्टभक्तः $\frac{१}{८}$ "गृहादिके वर्गगणे" इत्यादिना मित्रगृहगुणकेन $\frac{१२}{९}$ अनेन गुणितः $\frac{१}{८}\times\frac{१२}{९}=\frac{१२}{७२}$=मित्रहोरादौ गुणः। एव सप्तवर्गगुणांका हराश्चोत्पद्यन्ते राशिस्थाने यवनवाक्यबलाद्द्विगुणः कार्य्य एवेति। अथ वर्गोत्तमस्वांशस्वत्र्यंशगते ग्रहे पूर्वोक्त्या गुणः २ चतुर्भक्तः $\frac{१}{२}$। अतोऽनुपातो यदि तत्तद्गृहगुणेन तत्तद्होरादिगुणो लभ्यते तदानेन ( $\frac{१}{२}$ ) किमिति गुणास्तावन्तः ( पाठपठिताः ) एव हरस्थाने षट्त्रिंशत् ३६ अंका भवन्त्यतः "सदा रसगुणैरित्युपपद्यते ॥ १७ ॥

भा०—जो ग्रह अपने वर्ग में हो उसका १८, अधिमित्र के वर्ग में १५ मित्र के वर्ग में १२ सम के वर्ग में ९, शत्रु के वर्ग में ५, अधि शत्रु के वर्ग में ३ होरादि षड्वर्ग में अंक लिखना केवल गृहस्थान में द्विगुणित करके स्थापन करना। फिर सब अंकों का योग करके यदि ग्रह स्वगृह में हो तो ३६ से, अधिमित्र की राशि में हो तो ४८ से, मित्र की राशि में हो तो ५४ से, सम की राशि में हो तो ७२ से, शत्रु की राशि में हो तो १०८ से, तथा अधिशत्रु की राशि में हो तो १४४ से,

※, +अस्यैव ग्रन्थस्य १६ श्लोकस्योदाहरणटीकायां विलोक्यम् ॥

उपरोक्त योग में भाग देने से एष्टि आश्रय गुणक होता है। यदि ग्रह स्वनवांश, या वर्गोत्तम नवांश, या स्वद्रेष्काण में हो तो योगांक को सर्वदा ३६ से भाग देने से आश्रय गुणक होता है ॥ १७ ॥

उ० दी०— अथ रविरधिशत्रुगृहे वर्त्तते तेन गुणा द्विगुणिताः (अर्थात् षट्)। एवं रविः स्वहोरायामस्ति तेन धृतिरष्टादश। एवं शत्रुद्रेष्काणे तेन पञ्च। समसप्तमांशे तेन नव। अधिशत्रुनवमांशे तेन त्रयः। अधिमित्रद्वादशांशे तथाधिमित्रत्रिंशांशे च इन्दिरला (पञ्चदश) रवेर्गृहादिसप्तवर्गेषु क्रमात्संस्थाप्य तेषां योगः = ६+१८+५+६+३+१५+१५=७१। अथ रविरधिशत्रुगृहेऽतः जिनाः २४ षड्गुणिताः १४४ अयं हरः। अथ चन्द्रकुजयोः स्वांशत्र्यंशगतत्वाद्धरः षट्त्रिंशदेव। एवं सर्वेषामित्यलं पल्लवितेनेति (द्र० ८३ चक्रम्)। अथ रवेः पूर्वानीतयोगः ७१ स्वहारेण १४४ नेन भक्तो जातः रवेराश्रयगुणकः ००।२९।३५ एवं चन्द्रादीनामपि (द्र० ८४ चक्रम्) ॥१७॥

अथाश्रयगुणके संस्कारविशेषं, कर्मयोग्यगुणकमंशायुर्दायोपयोगिनो दायांशांश्चाह—

चेद्वर्गोत्तमपूर्वगोऽप्यरिसुहृद्भे तद्गृहाङ्कात् त्रिषड्-
लब्ध्योनो युगरीष्टभेऽब्धिनवकाप्त्या स्वे समे केवलः।
कार्यस्त्वाश्रयकः स तत्स्फुटदृतेर्मूलं स योग्यो गुणः
खेटानां च तनोर्लवाः खयुगहृच्छेषा इहांशायुषः ॥१८॥

व्या०—चेद् यदि ग्रहो वर्गोत्तमपूर्वगो वर्गोत्तमनवांशस्वनवांशस्वद्रेष्काणेष्वन्यतमस्थो भवेत् तदा तद्गृहांकात् गृहवर्गस्यापितांकात् त्रिषड्लब्ध्या त्रिषष्टिभक्तफलेन क्रमेणाश्रयगुणक ऊनो युक् (अधिशत्रुराशौ ग्रहे ऊनोऽधिमित्रराशौ स्थिते युक्तः) कार्यः। एवं अरीष्टभे ग्रहो (वर्गोत्तमपूर्वगश्चेत् शत्रुमित्रगृहे) भवेत् तदा। गृहांकात् अब्धिनवकाप्त्या चतुर्नवत्या लब्धफलेन क्रमादूनयुक् आश्रयगुणकः कार्यः। तथा वर्गोत्तमपूर्वगः स्वे स्वराशौ समे समराशौ वा ग्रहो भवेत् तदा केवलः पूर्वसाधित एवाश्रयगुणको ज्ञेयः। तत्स्फुटदृतेराश्रयगुणस्पष्टगुणकघातान्मूलं स योग्यः कर्मयोग्यो गुणो भवति अथ दायांशान् कथयति—खेटानामिति। इहात्र खेटानां ग्रहाणां, तनोर्लग्नस्य च लवा अंशाः खयुगहृच्छेषा अंशायुषो दायांशा भवन्ति ॥१८॥

अथ चक्रार्धहानिमाह—

**पङ्भाल्पे सति खेचरोन उदयेऽस्यांशोद्धृतैः खाग्निभि-**
**स्त्वेकाल्पेऽस्य च खाग्निभाजितलवैः सौम्योनिते त्वर्धितैः।**
**ऊना भूर्गुण एकभे द्विबहुपु त्वेकस्य बह्वोजसः**
**कार्यस्तद्गुणिताः स्वदायजलवाश्चक्रार्धहानिस्त्वियम् ॥१६॥**

व्या०—खेचरोने ग्रहोने उदये लग्ने पड्भाल्पे सति अस्य पड्भाल्पस्य लग्नोनखेचरस्यांशोद्धृतैः खाग्निभिरूना भूरेको गुणः स्यात्। (पंडधिके ग्रहोनोदये हानिर्नैवेत्यर्थात् सिद्ध्यति) च तथा ग्रहोनोदये एकाल्पे सति अस्य खाग्निभाजितलवैस्त्रिंशद्भक्तांशैरूना भूर्गुणो भवति। सौम्योनिते शुभग्रहोने उदये तु अर्धितैरर्धितैरंशोद्धृतैः खाग्निभिः, अर्धितैः खाग्निभाजितलवैर्वा ऊना भूर्गुणो भवति। तुर्विशेपार्थः। एकभे एकराशौ द्विबहुपु द्वित्र्यादिपु ग्रहेपु सत्सु एकस्य बह्वोजसोऽधिकबलस्य गुणः कार्यः। न सर्वस्य। तद्गुणिताः स्वदायजलवाः कार्याः इयं चक्रार्धहानिर्भवेत् ॥१६॥

अत्रोपपत्तिः—"सर्वार्धत्रिचरणपञ्चपष्टभागाः क्षीयन्ते व्ययभवनादसत्सु वामम्। सत्स्वर्धं ह्रसति तथैकराशिगानामेकोऽशं हरति बली तथाह सत्यः" इति सयुक्तिवृद्धवाक्येन लग्नाद्द्वादशे पापग्रहे आयुपः सर्वांशः क्षीयते, शुभग्रहे त्वर्धभागो नश्यति तत्र खेचरोनोदय एकराशिः। एवमेकादशे पापेऽर्धांशो नश्यति तत्र खेचरोनोदयो राशिद्वयतुल्यः, दशमे च राशित्रयमन्तरं तत्र त्र्यंशहानिः, नवमे पापे राशिचतुष्टयमन्तरं तत्र चतुर्थांशहानिरेवं यथा यथान्तरवृद्धिस्तथा तथाऽऽयुर्हानिह्रवृद्धिरतोऽनुपातो यदि त्रिंशदंशैरेको हरस्तदेष्टखेचरोनोदयांशैः क इति इष्टहर $=\frac{\text{इअं} \times १}{३०}$ अनेनायुर्लवा भक्ता जाता हानिलवाः $=\frac{\text{आअं} \times ३०}{\text{इ अं}}$ एभिर्हीना आयुर्लवा जाता इष्टायुरंशाः $=\text{आअं} - \frac{\text{आअं} \times ३०}{\text{इ.अं}} = \frac{\text{इअं} \times \text{आअं} - \text{आअं} \times ३०}{\text{इअं}}$

$=\frac{\text{आअं}(\text{इअं} - ३०)}{\text{इ अं}} = \text{आअं}\left(१ - \frac{३०}{\text{इअं}}\right)$ । एकभाल्पे (त्रिंशदंशाल्पे) खेचरोनोदये तदंशभक्तत्रिंशतो रूपाधिकत्वात् रूपाच्च शुद्ध्य-

तीति व्यस्तत्रैराशिकेन खाग्निभाजितलवैरित्युपपद्यत इति सर्वं निरवद्यम् ॥१६॥

भा०—लग्नमें ग्रहको घटाकर यदि ६ राशि से न्यून हो तो उसका अंश बना कर उस अंशासे ३० में भाग देकर लब्धि को १ एक में घटा कर गुणक होता है। लग्न में ग्रहको घटाने से १ राशिसे अल्प हो तो अन्तरांश को ३० से भाग देकर लब्धि को १ में घटावे तो गुणक होता है इस प्रकार पाप ग्रह हो तो गुणक होता है। यदि शुभ ग्रह हो तो लब्धि के आधा को १ में घटाकर गुणक होता है। यदि एक राशि में दो वा दो से अधिक ग्रह हो तो उनमें सबसे बली जो हो उसीका गुणक करना सब ग्रह का नहीं। फिर उस गुणक से दायांश को गुना करना तो चक्रार्धहानि होती है। ग्रहोन लग्न यदि ६ राशि से अधिक हो तो चक्रार्धहानि गुणक नहीं करना ॥१९॥

उ० दी०—अथ गुरुः १।१६।५७।३० लग्नम् ६।१८।३४।५६ अतो गुरूनोदयः ४।२८।३७।१६ अस्यांशैः १४८।३७।१६ रैभिस्त्रिंशद्भाज्या। अत्र सवर्णनार्थं भाज्यहारौ वारद्वयं षष्ट्या गुण्यौ। एवं भाज्यः $=३०\times६०\times६०=१०८०००$। एवमेव हारः $=$ (१४८।३७।१६) $=५३५०३६$। अथ भाज्येऽ १०८००० स्मिन् हारेण ५३५०३६ नेन भक्ते लब्धम् ००।१२।०६।४०।४६ शुभग्रहत्वादेतदर्धेना ००।०६।०३।२०।२४ नेनैको हीनः ००।५३।५६।३६।३६ अयं गुरोश्चक्रार्धहानिगुणः। एवं शनेरपि तत्र पापग्रहत्वादर्धांशो रूपान्न शोध्यः। किन्तु सम्पूर्णांश एव शोध्यः। एवमन्येषां खेचरोनोदयस्य षड्भाधिकत्वाच्चक्रार्धहानिर्न जाता (द्र० ६२ चक्रम्) ‡।

अथ गुरोर्दायांशाः ६।५७।३० स्वचक्रार्धहानिगुणकेनानेन ००।५३।५६।३६।३६ गुणिता. ८।५७।११।४४।२१= ८।५७।१२ अर्धाधिकग्रहणाज्जाता गुरोश्चक्रार्धहानिसंस्कृतायुरंशाः। एवं शनेरपि। अन्येषां संस्काराभावात्प्रागानीता एवांशाः (द्र० ६४ चक्रम्)।

---

‡ अत्र ६१तमचक्रानयनार्थं तच्चक्रा र स्थिता नीलकण्ठपद्धत्युक्तिर्द्रष्टव्या। यथा गुरूनोदयस्यांशा. १४८।३७।१६ द्वाभ्यां गुणिता २९७।१४।३२ खरसैर्भक्ता ४।५७।१४।३२ शुभग्रहत्वाद्द्विगुणिता ९।५४।२९।०४ अयं गुरोश्चक्रार्धहानिहर। एवं शनेरपि परमत्र खरसहृता एव ग्राह्या न तु द्विगुणिता इति।

अत्रोपपत्तिः—यदि वर्गोत्तमादित्रिकान्यतमस्थितो ग्रहोऽधिशत्रुराशौ तदा पूर्वोक्तेन "यः स्वाधीष्टेत्यादिना" गृहगुणकः $= \frac{\text{गृहांक}}{३६}$ तथा "नगांशका रुद्रमिता अधीष्टराशौ."* इत्यादिना अधिशत्रुराशौ त्र्योनगांशाः ( $\frac{३}{७}$ ) त्रिगुणितसप्तमांशो वास्तवगुणः $= \frac{\text{गृहांक} \times \frac{३}{७}}{३६} = \frac{\text{गृहांक}}{३६} \times \left( १ - \frac{३}{७} \right) = \frac{\text{गृहांक}}{३६} - \frac{\text{गृहांक} \times ४}{३६ \times ७} = \frac{\text{गृहांक}}{३६} - \frac{\text{गृहांक}}{६३}$ । एतेन अत्यरिभे गृहांकात् त्रिषड्लब्ध्योन इत्युपपन्नम् । तथा "नगांशका रुद्रमिता अधीष्टराशौ" इति वचनेनाधिमित्रराशौ वास्तवगुणः $= \frac{\text{गृहांक}}{३६} \times \frac{११}{७} = \frac{\text{गृहांक}}{३६} \left( १ + \frac{४}{७} \right) = \frac{\text{गृहांक}}{३६} + \frac{\text{गृहांक} \times ४}{३६ \times ७} = \frac{\text{गृहांक}}{३६} + \frac{\text{गृहांक}}{६३} \therefore$ अधिसुहृद्भे "गृहांकात्त्रिषट्लब्ध्या युक्" इत्युपपद्यते। तथा 'सुहृद्वेश्मनि सूर्च्छनांशा नवाश्विनः $\frac{२३}{२१}$" इति वचनेन मित्रभे वास्तवगुणः $= \frac{\text{गृहांक}}{३६} \times \frac{२३}{२१} = \frac{\text{गृहांक}}{३६} \left( १ + \frac{२}{२१} \right) = \frac{\text{गृहांक}}{३६} + \frac{\text{गृहांक} \times २}{३६ \times २१} = \frac{\text{गृहांक}}{३६} + \frac{\text{गृहांक} \times २}{१८९} = \frac{\text{गृहांक}}{३६} + \frac{\text{गृहांक}}{९४\frac{१}{२}} = \frac{\text{गृहांक}}{३६} + \frac{\text{गृहांक}}{९४}$ स्वल्पान्तरात् । "कुद्व्यंशका विश्वमिता द्विषद्भे" इत्यनेन शत्रुराशौ अब्धिनवकाप्त्योन इत्युपपद्यते। वस्तुतोऽब्धिनवकस्थाने सार्धचतुर्नवतिर्भवत्यतो "द्विगुणगृहांकाष्टाष्टैकाप्तोनयुगाश्रयगुणः कार्यः" इति दैवज्ञचक्रचूडामणि-श्रीयुक्तं युक्तमेव । समभे स्वराशौ च रूपगुणत्वात् "केवलः" यथागत एवाश्रयगुणः कार्य इत्यपि साधु समुदितम् । घातमूलस्य स्फुटता प्रागेव प्रदर्शिता। अथ दायांशोपपत्तिः—वराहमिहिरादिवचनेन 'ग्रहभुक्तनवांशराशितुल्यं" आयुर्वर्षप्रमाणं भवत्यतो भुक्तनवांशज्ञानार्थमनुपातो यदि त्रिंशद्भागैर्नव नवांशसंख्या तदा ग्रहलग्नभुक्तांशैः किमिति ग्रहलग्नभुक्तनवांशसंख्या सा च राशीनां द्वादश-

* अस्यैव ग्रन्थस्य १६ श्लोकस्योदाहरणटिप्पण्यां विलोक्यम् ।

त्याद् द्वादशतष्ठा $\frac{\text{भुक्तांश} \times ६}{३० \times १२} = \frac{\text{भुक्तांश}}{४०}$ शेषराश्यादितुल्या अंशा-
युषो ( दायांशाः ) भवन्त्येवेत्युपपन्नम् ॥१८॥

भा०—यदि ग्रह वर्गोत्तमनवांश, स्वनवांश वा स्वद्रेष्काण में स्थित होकर अधिशत्रु के गृह में हो तो गृहांक को ६३ से भाग लेकर लब्धि को आश्रय गुणक में घटाने से, यदि अधिमित्र के घरमें हो तो उसी लब्धि को आश्रय गुणक में जोडने से वास्तव ( संस्कृत ) आश्रय गुणक होता है। यदि शत्रु की राशि में हो तो गृहांक को ९४ से भाग देकर लब्धि को ※ आश्रय गुणक में घटाने से, मित्र के घर में हो तो जोडने से वास्तव ( संस्कृत ) आश्रय गुणक होता है। यदि सम की राशि में वा स्वगृह में हो तो केवल पूर्वसाधित आश्रय गुणक ग्रहण करना। इस आश्रय गुणक और पूर्वोक्तस्फुट गुणक का घात ( गुना ) करके मूल लेना तो कर्मयोग्य गुणक होता है। ग्रह अथवा लग्न को अंशात्मक बनाकर उसको ४० से भाग देकर शेष आयुर्भाग ( दायांश ) होता है ॥१८॥

उ० दी—अथ चन्द्रकुजयोः स्वांशन्यंशगतत्वादाश्रयगुणके पुनरन्योऽपि संस्कारः। यथा शत्रुगृहगतस्य चन्द्रस्य गृहाङ्का १० दस्माद्दब्धिनवकाप्तेना ००।०६।२३ नेन पूर्वानीतोऽय २।१६।४० माश्रयगुणको रहितो वास्तवाश्रयगुणको जातः २।१०।१७। वस्तुतस्तु "शत्रोर्गृहे पूर्णपदा नवाष्टेन्दुहृता ऋण" मित्यनेन चन्द्रस्य संस्कृताश्रयगुणकः २।१०।१६ अयमेव ग्राह्यः। एतदर्थं ८५ चक्राधःस्थितगद्यमवलोक्यम्। अथ कुजस्याधिमित्रगृहगतत्वाद्गृहाङ्कस्या ३० स्य त्रिषष्ट्यंशेना ००।२८।३४ नेन पूर्वानीतोऽ २।३५।०० यमाश्रयगुणको युक्तो जातः संस्कृताश्रयगुणकः ३।०३।३४। अन्येषां वर्गोत्तमादिस्थानराहित्यात्पूर्वानीत एवेति ( द्र० ८५ चक्रम् )।

अथ रवेः स्फुटगुणकः १।२८।२६। आश्रयगुणकः ००।२६।३५ अनयोर्युतिः ००।४३।४१ अस्या मूलम् ००।५१।६ अयं कर्मयोग्यगुणः। एवं सर्वेषाम् ( द्र० ८८ चक्रम् )।

अथ राश्यादिस्पष्टो रविः १०।१२।५७।३८ अस्यांशाः ३१२।५७।३८ चत्वारिंशद्भक्ताः शेषमिद ३२।५७।३८ मंशायुरंशात्मकम्। यद्यस्यैव कलाः क्रियन्ते तदा तु अंशायुःकलाः १९७७।३८ एवं सर्वेषाम् ( द्र० ८९—९० चक्रे ) ॥१८॥

---

※ गृहांक को २ से गुणाकर १८९ का भाग देने से वास्तव लब्धि होती है।

अथात्रांशास्त्रिशता सङ्गुण्य यदि फलस्थाने प्रक्षिप्यन्ते तदा ६३ तमश्चक्रं सिद्ध्यति ( द्र० ६३ चक्रम् ) ॥१९॥

अथ वर्षाद्यंशायुरानयनमाह—

**दायांशोत्थकलाः स्वयोग्यगुणकघ्नाः खाभ्रनेत्रोद्धृता अंशायुर्ग्रहसदां समादि तु तनोर्दायांशकास्त्र्याहताः । दिग्भक्ता हि समादि चेत्तु बलवल्लग्नं तदा लग्नभैस्तुल्याब्दैः सहितं द्विनिघ्नशरहृद्भागादितो मासयुक् ॥२०॥**

व्या०—ग्रहसदां ग्रहाणां दायांशोत्थकलाः चक्रार्धहानिसंस्कृतदायांशानां कलाः स्वयोग्यगुणकघ्नाः स्वकीयकर्मयोग्यगुणकेन गुणिताः खाभ्रनेत्रोद्धृता द्विशत्या भक्ता लब्धं समादि वर्षाद्यमंशायुर्भवति । तु पुनः तनोर्लग्नस्य दायांशकाः त्र्याहताः त्रिभिर्गुणिता दिग्भक्ताः फलं लग्नस्य समादि वर्षाद्यमंशायुर्भवति । चेत्तु यदि तु बलवल्लग्नं षड्रूपाधिकबलं लग्नं तदा लग्नभैर्लग्नभुक्तराशिभिस्तुल्याब्दैः सहितं कार्यम् । तथा द्विनिघ्नशरहृद्भागादितो मासयुक् ( द्विगुणिताल्लग्नवर्तमानराश्यंशादितः पञ्चभक्ताल्लब्धमासाद्यं मासादौ युक्तं कार्यमित्यर्थः ) एवं लग्नायुः स्फुटं भवति । लग्नबलं यदि षड्रूपाल्पं तदा "दायांशकास्त्र्याहता दिग्भक्ताः" एव लग्नायुः स्यादिति ॥२०॥

अत्रोपपत्तिः—"ग्रहभुक्तनवांशराशितुल्यम्" इति वचनेन यद्येकनवांशकलाभिः खाभ्रनेत्रमिताभि ( २०० ) रेकं वर्षं तदा स्वयोग्यगुणकगुणितदायांशकलाभिः किमिति ग्रहाणामंशायुर्वर्षाद्यम्

$= \frac{\text{दायांश.} \times \text{यो गु.}}{२००}$ । अथ लग्नायुरानयनार्थमनुपातो यदि त्रिंशदंशैर्नव वर्षाणि तदा लग्नदायांशैः किमिति लग्नांशायुः $= \frac{९ \times \text{ल. दा. अं}}{३०}$

$= \frac{३ \times \text{ल. दा. अं}}{१०}$ । तथा "वीर्यान्विता राशिसमं च होरा" इति वराहमिहिरोक्तेन "लग्नभैस्तुल्याब्दैः सहित" मित्यपि समुचितमेव । अंशादिफलमनुपातेन — यदि त्रिंशदंशैर्द्वादशमासा लभ्यन्ते तदा लग्नांशैः किमिति मासादिफलेन $\frac{१२ \times \text{ल अं}}{३०} = \frac{२ \times \text{ल.अं}}{५}$ अनेन युक्तं

स्फुटं लग्नायुर्वर्षाद्यं स्यात्। लग्नस्य चक्रार्धहान्यादिसंस्काराभावात्।
अतः सर्वमुपपन्नम् ॥२०॥

भा०—चक्रार्धहानि संस्कृत दायांश को कलात्मक करके अपने अपने कर्म योग्य गुणक से गुना कर उसमें २०० का भाग देने से वर्षादिक ग्रहों की अंशायु होती है। और लग्न के दायांश को ३ तीन से गुना करके १० दश का भाग देने से लब्धि वर्षादिक लग्न की अंशायु होती है। यदि लग्न का बल ६ से अधिक हो तो लग्न की भुक्तराशितुल्य वर्ष और जोड़ना तथा लग्न के अंशों को २ से गुना कर उसमें ५ का भाग देने से लब्धि मासादिक फल मासादिक में जोड़ना तो लग्न की स्पष्ट आयु होती है ॥२०॥

उ० दी—अथ रवेश्चक्रार्धहानिसंस्कृतदायांशकलाः १६७७। ३८ स्वकर्मयोग्यगुणकेना ००। ५१। ०६ नेन गोमूत्रिकया गुणिताः १६८४। १७ द्विशत्या भक्ताः लब्धिर्वर्षाणि ८, शेषं ८४।१७ मिदं द्वादशभिर्गुणितम् १०११। २४ द्विशत्याऽऽप्तं मासाः ५ शेषं ११। २४ त्रिंशता गुणितम् ३४२। ०० द्विशत्या भक्तं लब्धं दिनं १ शेषम् १४२ षष्ट्या गुणितं ८५२० द्विशत्या, लब्धम् घटयः ४२ शेषं १२० षष्ट्या गुणितं ७२०० द्विशत्याप्तं पलानि ३६। अथ वर्षादीनां क्रमान्न्यासेन रवेरंशायुर्वर्षाद्यम् ८। ५। ०१। ४२। ३६ एवमन्येषां ग्रहाणाम्। अथैवं लग्नस्य दायांशाः ३८। ३४। ४६ त्र्याहताः ११५। ४४। १८ दशभक्ताः लब्धं वर्षाद्यम् ११। ०६। २६। ३४। ३८ अथ षड्रूपाधिकं लग्नबलमतः लग्नराशितुल्येन वर्षेणा ६ नेन युक्तम् १७। ०६। २६। ३४। ४८ पुनर्लग्नस्य भागादिकं १८। ३४। ४६ द्विनिघ्नं ३७। ०६। ३२ पञ्चभिर्भक्तं लब्धेन मासाद्येना ७। १२। ५७। १२ नेन युक्तं जातं लग्नस्यांशायुर्वर्षाद्यम् १८। ०२। ०६। ३२। ०० (द्र० ६५ चक्रम्) ॥२०॥

अथ पिण्डनिसर्ग-जीवशर्मायुर्दायोपयोगिनो दायांशानाह—

स्वोच्चोनो द्युचरोऽङ्गभात्समधिको ग्राह्योऽल्पकोनार्कभं
तद्भागा द्युचरोऽरिभे यदि गुणांशोना विना वक्रगम्।
द्व्याप्ता अस्तमिते विना शनिसितौ हानिद्वयेऽत्राधिके-
नाधो पिण्डनिसर्गजीवगदिते चक्रार्धहानिर्भवेत् ॥ २१ ॥

व्या०—स्वोच्चोनो द्युचरः स्वकीयोच्चेन विहीनो ग्रहोऽङ्गभात् षड्राशिभ्यः समधिको ग्राह्यः। राशिषट्कादल्पश्चेत् तदा अल्पकोना-

कर्मं ( रसभाल्पं द्वादशराशिभ्यो विशोध्य शेषं ) ग्राह्यम् । तद्भागास्तदीयांशाः कार्याः । ते पिण्डनिसर्गजीवायुर्भागा ज्ञेयाः । यदि वक्रगं ( वक्रगतिग्रहं ) विना द्युचरो ( मार्गगतिग्रहः ) अरिभे शत्रुराशौ स्थितस्तदा तद्भागा गुणांशोनाः स्वतृतीयांशेन हीनाः कार्याः । वक्रगतिग्रहः स्वत्र्यंशं नैवापहरतीत्यर्थः । तथाऽस्तमितेऽस्तं गते ग्रहे शनिसितौ विना तद्भागा द्व्यास्ता अर्धिताः कार्याः । शनिशुक्रावस्तं प्राप्तावपि स्वार्धं नापहरत इत्यर्थः । अत्र हानिद्वये प्राप्तेऽधिका महत्तरैकैवार्धहानिरेव कार्या । नैव हानिद्वयं कार्यम् । अथानन्तरं पिण्डनिसर्गजीवगदितेऽपि चक्रार्धहानिर्भवेत् । अत्र शत्रुर्नैसर्गिको ग्राह्यो न तु तत्कालिक इति ॥ विशेषार्थमुदाहरणे ( १०० ) चक्राधःस्वगर्थं विलोक्यम् ॥२१॥

अथोपपत्तिः—"नीचेऽतोऽर्धं ह्रसति हि ततश्चान्तरस्थेऽनुपातः" इति बृहज्जातकवचनेन स्वोच्चस्थे पठितायुःप्रमाणं, नीचे तदर्धम् । अतो नीचात् षड्भान्तरिते ( उच्चस्थे ) ग्रहे आयुरर्धतुल्य उपचयो भवति । अतोऽनुपातो—यदि षड्राशितुल्येन नीचग्रहान्तरेणायुरर्धतुल्य उपचयस्तदेष्टनीचग्रहान्तरेण किमिति $= \frac{\text{आ०} \times (\text{ग्र}-\text{नी})}{2 \times 6}$

$=$ इष्टोपचयः, अनेन युतं नीचस्थानभवमायुरर्धमिष्टायुः $=$
$\frac{\text{आ.}}{2} + \frac{\text{आ.}(\text{ग्र}-\text{नी})}{12} = \frac{6 \times \text{आ.} + \text{आ.}(\text{ग्र}-\text{नी})}{12} = \frac{\text{आ०} \times (6 + \text{ग्र}-\text{नी})}{12}$

$= \frac{\text{आ०} \times (\text{ग्र}-\text{उ})}{12}$, एवमत्र "यदि द्वादशराशिभिः पठितायुस्तदोच्चोनग्रहराशिभिः किम्" इतित्रैराशिकसमं फलं दृश्यते । तत्राचार्येणांशानुपात एव कृतो यथा—यदि द्वादशराश्यंशैर ( ३६० ) भिः पठितायुः ( आ० ) इति लभ्यते तदोच्चोनग्रहांशैः किमिति अत एव "दायांशाः स्वगुणैर्हता हि भगणांशाप्ता" इत्यग्रे वक्ष्यति । तथा चात्र ६<६+ग्र–नी=ग्र—उ, अतः षड्राश्यधिकेनोच्चग्रहान्तरेण भवितव्यमतः "अक्रमात्प्रमधिको ग्राह्योऽल्पकोनार्कभम्" इत्युपपन्नम् । "हित्वा वक्रं रिपुगृहगतैर्हीयते स्वत्रिभागः सूर्योच्छिन्नद्युतिषु च दलं प्रोज्झ्य शुक्रार्कपुत्रौ ।" इत्यादिहोरागमप्रमाणेन त्र्यंशार्धहानिरुपपद्यते । तथा "वक्रोच्चयोस्त्रिगुणितम्" इति वक्रगतिग्रहस्य सबलत्वान्न त्र्यंशहानिरिति समुचितमेव । सूर्यः शनिशुक्रयोः शत्रुरतस्तेनास्तमितयोरपि तयोर्नायुर्हानिरिति । तथा—"यद्बुध्नतायामेकं तु यद्भूरि तदेव कार्य्यम्"

इति वचनादिना "अधिकैका हानिः कार्या" इति, तथा "पूर्वोक्तं चिन्तयेत् सर्वम्" इति सारावलीवाक्येन "चक्रार्धहानिर्भवेदिति" च साधु समुदितम् ॥२१॥

भा०—ग्रहमें अपने उच्चको घटाकर शेष ६ राशिसे अधिक हो तो, उसका अंश बनाना, ६ राशिसे अल्प हो तो उसको १२ में घटाकर शेषका अंश करना तो पिण्डादित्रिकायुर्भाग होता है। यदि ग्रह शत्रु गृहमें हो तो आयुर्भागमें तृतीयांश घटा देना। यदि ग्रह वक्र गति हो तो शत्रु गृहमें भी त्र्यंश हानि नहीं करना। तथा यदि ग्रह अस्त हो तो आयुर्भागमें आधा कम करना। यदि शुक्र और शनि अस्त भी हो तो अर्ध हानि नहीं होती है। जिस ग्रहकी अर्धहानि और त्र्यंश हानि दोनों की सम्भावना हो तो वहाँ केवल अर्ध हानि करना। और पिण्डादित्रिकायु ( पिण्ड-निसर्ग-जीवायु ) में भी चक्रार्ध हानि करना। यहाँ शत्रु नैसर्गिक विचार करे तात्कालिक नहीं ॥२१॥

उ० दी०—अथ रविः १०।१२।५७।३८ स्वोच्चेना ००।१० नेन रहितः १०।०२।५७।३८ अस्यांशा ३०२।५७।३८ एते पिण्डादित्रिकायुरंशा जाताः। एवं सर्वेषां सिद्धयन्ति ( द्र० १०० चक्रम् )।

अथोच्चोनरवेर्यदि कलाः क्रियन्ते तर्हि पिंडादित्रिकायुष्कलाः १८१७७।३८ इति ९९ चक्रावलोकनेनैव स्पष्टम्।

अथात्रोदाहरणे—रविगुरू शत्रुगृहे वर्त्तेते तेन तयोः त्र्यंशहानिः स्यादेव। परं शत्रुगृहगतस्यापि शनेर्वक्रगतित्वान्न त्र्यंशहानिर्जाता। बुधः सूर्येण सहास्तं गतस्तेनार्द्धहानिः स्यात्। गुरुशन्योस्तु चक्रार्धहानिरप्यादावंशायुर्दायवदेव कार्या।

तद्यथा—रवेः पिण्डादित्रिकायुरंशाः ३०२।५७।३८ स्वत्र्यंशेना-१००।५९।१२।४० नेन हीनिताः २०१।५८।२५।२० एतद्रवेः संस्कृत-पिण्डादित्रिकायुः। एवं बुधस्याप्यर्धहानिः कार्या। गुरोस्तु प्रथमं त्र्यंशहानिः ततः चक्रार्धहानिः कार्या। तद्यथा नीचोनगुरोरंशाः ३१४।५७।३० स्वत्र्यंशेना १०४।५९।१० नेन रहिताः २०९।५८।२० एते गुरोश्चक्रार्धहानिगुणकेना ५३।५६।३९।३६ नेन गोमूत्रिकया गुणिता जाता गुरोस्त्र्यंशचक्रार्धहानिहृताः पिण्डादित्रिकायुरंशाः १८८।४६। ४८।४० एवं नीचोनशनेरंशाः स्वचक्रार्धहानिगुणकेन गुणिताः शनेः पिण्डादित्रिकायुरंशाः सिद्धयन्ति इति ( द्र० १०१ चक्रम् ) ॥२१॥

अथ लग्ने पापग्रहे हानिमाह—

दायांशा द्युसदां पृथक् तनुलवादिघ्नाः खषट्त्र्युद्धृता
आप्त्योनास्तनुगे खले च यदि सद्दृष्टेऽर्धयाथापरे।
निघ्न्योग्रोदयभावजेन तनुगौग्रौ चेद्बलिष्ठस्य तत्-
साम्ये पुष्टफलेन नेति तनुपेऽस्मिन्नांशजेऽसौ क्रिया ॥२२॥

व्या० – खले पापग्रहे तनुगे लग्नस्थे सति द्युसदां ग्रहाणां दायांशाः (अनन्तरानीता) पृथक् स्थाप्याः। ते तनुलवादिघ्ना लग्नस्य राशीन्विहायांशादिना गुणिताः खषट्त्र्युद्धृताः षष्ट्यधिकशतत्रयेण भाज्या आप्त्या लब्धेनांशादिना पृथक्स्था ऊनाः कार्याः। तनुगे खले सद्दृष्टे शुभग्रहेक्षिते सति अर्धयाऽऽप्तफलार्धेन। पृथक्स्था हीनाः कार्याः। अथानन्तरमपरे आचार्याः (ह्मालुगिरामकृष्णादयः) उग्रोदयभावजेन लग्नस्थपापग्रहस्य भावजेन फलेन निघ्न्याऽऽप्त्या दायांशा ऊनाः कार्याः। तनुगौग्रौ लग्ने द्वौ पापौ चेत् तदा बलिष्ठस्य भावजफलेन। तत्साम्ये बलसाम्ये पुष्टफलेनाधिकफलेन निघ्न्याऽऽप्त्या दायांशा ऊनाः कार्या एवं वदन्ति। इति न (इदं तन्मतं न रमणीयमित्यर्थः)। अथ लग्नस्थक्रूरे लग्नेशे इयं हानिः कार्या न वेत्याशंकायां कथयति 'तनुपेस्मिन्निति' अस्मिन् लग्नस्थक्रूरे तनुपे लग्नेशे सति तथांशजेऽशायुर्दायेऽसौ क्रिया न कार्या ॥२२॥

अत्रोपपत्तिः –'सार्धोदितोदितनवांशहतात्समस्ताद् भागोऽष्टयुक्तशतसंख्य उपैति नाशम्। क्रूरे विलग्नसहिते विधिना त्वनेन सौम्येक्षिते दलमतः प्रलयं प्रयाति॥" इति बृहज्जातकवचनेन क्रूरे लग्नगे हानिभागः $= \frac{\text{दायांश} \times \text{लग्नयांश}}{१०८}$। अत्र लग्ननवांशं "यदि त्रिंशदंशैर्नव नवांशा लभ्यन्ते तदेष्टलग्नांशादिभिः किमिति $= \frac{९ \times \text{लग्नांशादि}}{३०}$" अनेनोत्थाप्य जातो हानिभागः $= \frac{\text{दायांश}}{१०८} \times \frac{९ \times \text{लग्नांशादि}}{३०}$

$= \frac{\text{दायांश} \times \text{लग्नांशादि}}{३६०}$। अनेन हीना दायांशाः स्फुटा भवितुमर्हन्ति।

अन्ये आचार्यास्तु 'यदि रूपमितेन १ पूर्णतद्भावफलेनेयं हानिस्त-

देष्टमावफलेन किमि" त्यनुपातोऽन्वयेन फलेन दायांशा ऊनाः कृता-, स्तच्च बहुसम्मतम्। शेषवासनायां स्वागम एव प्रमाणमित्यलं पल्लवितेन ॥२१॥

भा०—यदि लग्न में पापग्रह हो तो ग्रह के पिण्डादि आयुर्भाग को पृथक् रखकर लग्न के अंशादि से गुना करके ३६० से भाग देकर लब्धि को पृथक् स्थित आयुर्भाग में घटावे। यदि शुभ ग्रह की दृष्टि लग्नगत पाप पर हो तो लब्धि के आधा आयुर्भाग ( दायांश ) में घटावे तो पिण्डायु होती है। दूसरे आचार्यों की सम्मति यह है कि, उपरोक्त लब्धि को लग्नगत पापग्रह के भावफल से गुनाकर दायांश में घटावे। शुभग्रह की दृष्टि रहे तो उसका आधा घटावे। लग्न में दो पाप ग्रह हो तो अधिक बल वाले के भावफल से गुना करे। बल में समता हो तो जिसका भावज फल अधिक हो उससे गुना करे। पर यह मतान्तर ग्राह्य नहीं है। • और लग्नगत क्रूर यदि लग्नेश हो तथा अंशायुर्दाय में यह संस्कार नहीं होता है॥२१॥

उ० दी—अथात्रोदाहरणे लग्ने क्रूराभावात् तज्जनिता हानिर्नास्त्येव। अन्यद् व्याख्यायत्नोऽत्रनेनैव सुगममिति ॥२२॥

अथ पिण्डनिसर्गजीवशर्मायुर्वर्षाद्यानयनमाह—

**गोऽजास्तत्त्वतिथिप्रभाकरतिथिस्वर्गा नखाः पैण्डजे**
**नैसर्गे नखभूद्विगोधृतिनखाः पञ्चाशदर्कोद्‌गुणाः।**
**दायांशाः स्वगुणैर्हता हि भगणांशाप्ताः समाद्यायुषो**
**स्वर्गाप्ताश्च समादि जैवमिभहृत्स्वांशैर्घटीष्वन्वितम्॥२२॥**

व्या०—अर्कात् ( अर्कमारभ्य सप्तानां ग्रहाणां ) क्रमात् गोऽजा स्तत्त्वतिथिप्रभाकरतिथिस्वर्गा नखा पैण्डजे पिण्डायुषि गुणाः स्युः। नैसर्गे निसर्गायुषि नखभूद्विगोधृतिनखाः पञ्चाशत् क्रमेणार्कादिग्रहाणां गुणाः स्युः। पैण्डजे नैसर्गे च दायांशाः स्वगुणैर्हता भगणांशाप्ताः लब्धतुल्ये समाद्ययुषी भवतः। तथा दायांशाः स्वर्गाप्ता एकविंशतिभक्ता लब्धं जैवं जीवशर्मोक्तं समाद्यायुर्भवति। तदिभहृत्स्वांशैरष्टभक्तदायांशैर्घटीष्वन्वितं कार्यं तदा वास्तवं स्यात्॥२२॥

अत्रोपपत्तिः-पिण्डायुषि "नवतिथिविषयाश्विभूतरुद्रदश सहिता दशभिः स्वतुंगभेषु" तथा नैसर्गे "एकं द्वौ नव विंशतिर्धृति-

कृती पञ्चाशदेषां क्रमाच्चन्द्रारेन्दुजशुक्रजीवदिनकृत्प्राभाकरीणां समाः।" इति वृहज्जातकोक्तान्येवायुर्वर्षाणि गृहीतानि। 'दायांशा स्वगुणैर्हता हि भगणांशाप्ताः समाद्यायुषी" इत्यन्तस्योपपत्तिः २१) एकविंशतितमश्लोकोपपत्तौ प्रदर्शिता। अथ जैवे युक्तिः—'सम तेन किलाहजीवशर्मा ग्रहदायं परमायुषः स्वरांशम्" इति वृहज्जातक वचनेनोच्चस्थे ग्रहे परमायुषः सप्तमांशतुल्यमायुः $\frac{(१२०|०|५|०|०)}{७}$ भवति. तत्र (उच्चे) दायांशाः भगणांशतुल्या अत इष्टस्थानेऽनुपातो यदि भगणांशतुल्यदायांशैः परमायुस्सप्तमांशतुल्यमायुस्तदेष्टदायांशैः

$$\text{किमिति}\ \frac{(\overset{\text{व.}}{१२०}\ \overset{\text{मा.}}{०}\,|\,\overset{\text{दि.}}{५})\ \text{दा अं.}}{७ \times ३६०} = \frac{\overset{\text{व.}}{१२०} \times \text{दा अ}}{७ \times ३६०} + \frac{\overset{\text{दि.}}{५} \times \text{दा अ.}}{७ \times ३६०} =$$

$$\overset{\text{व.}}{\frac{\text{दा अं.}}{२१}} + \overset{\text{घ.}}{\frac{६० \times ५ \times \text{दा अं.}}{७ \times ३६०}} = \overset{\text{व.}}{\frac{\text{दा अं.}}{२१}} + \overset{\text{घ.}}{\frac{५ \times \text{दा अं.}}{४२}} = \overset{\text{व.}}{\frac{\text{दा अं}}{२१}} + \overset{\text{घ.}}{\frac{\text{दा अं.}}{८}}$$

स्वल्पान्तरात्। अत उपपन्नं जैवानयनम्। वस्तुतो "लवतः शरमाद् द्विवेदभागातघटीभिरन्वितम्" इति सुन्दरमिश्रोक्तमेव सुष्ठुतरमित्युपपन्नं सर्वम् ॥२३॥

भा०—(१९। २५। १६। १२। १५। २१। २०) ये क्रम से सूर्यादि सात ग्रहों के पिण्डायु में गुणक होते हैं। और निसर्गायु में २०, १, २, ९, १८, २०, ५०, ये क्रम से सूर्यादि ग्रहों के गुणक हैं। ग्रहों के दायांश को अपने अपने गुणक से गुनाकर ३६० के भाग देने से वर्षादिक पिण्डायु, और निसर्गायु होती है। जीवशर्मायु के लिये दायांश को २१ से भाग देकर लब्धि वर्षादि जीवायु होती है। उस में दायांश को ८ से भाग देकर लब्धि घट्यादि को जोड देने से वास्तव आयुप्रमाण होता है ॥ २३ ॥

उ० टी—अथ रवेः पिण्डादित्रिकायुरंशाः ३०२।५७।३८ गोऽजै- १९ र्गुणिताः ५७४५।१५।७२ भगणांशै ३६० रैभिर्भक्ताः लब्धं वर्षाद्यं पिण्डायुः १५।११।२६।१५।०२ एवं सर्वेषां पिण्डायुः साध्यम्। परं शनिगुर्वोश्चक्रार्धहानिः पूर्ववदेव कार्या (द्र० ६७ चक्रम्)। एवं रवेः पिण्डादित्रिकायुरंशाः ३०२।५७।३८ नैसर्गजेन गुणेना २० नेन गुणिताः

६०५६।१२।४० एते षष्ट्यधिकशतत्रयेण भक्ताः लब्ध वर्षाद्यं १६।०६। २६।१२।४० निसर्गायुरिति ( द्र० ६८ चक्रम् )।

अथ रवेः पिण्डादित्रिकायुरंशाः ३०२।५७।३८ खगौना २१ नेन भक्ताः १४।०५।०३।३६।३४ अष्टभक्तपिण्डादित्रिकायुरंशेना ३७।५२ नेन घट्यादौ युक्ता १४।०५।०४।१४।२६ जाता वर्षाद्यं जीवायुः। परमिदमानयनं स्थूलम्। वास्तविकन्तु "लवतः शरघ्नाद् द्विवेदभागात्त-घटीभिराढ्यम्" इति मिश्रोक्त्या, पिण्डादित्रिकायुरंशा. ३०२।५७। ३८ पञ्चगुणिता १५१४।४८। १० द्विचत्वारिंशद्भक्ताः ३६।०४ घमिघटीपलैः खगांशदायांशवर्षादिकं १४।०५।०३।३६।३४ युक्तम् १४।५।४। १२।३८ जातं जीवायुः ( द्र० ६६ चक्रम् )। एवं हानित्रयकृतदायांशेभ्यः ( १०२-१०३-१०४ ) चक्राणि सिद्ध्यन्तीत्यलं पल्लवितेन ॥२३॥

अथ सिद्धेषु पिण्डादित्रिषु लग्नायुरानयनमाह—

**स्याल्लिप्ताः खनखोद्धृता विभतनोर्वर्षादि पैण्डत्रिके**
**लग्नायुर्निखिलैस्तदंशकसमं कैश्चिद् भतुल्यं स्मृतम्।**
**यस्येशोऽधिबलस्तदेव हि परैस्तेनाढ्यमन्यैर्यद्-**
**शायुर्वत्त्वथ चांशतुल्यमखिलोक्तं ग्राह्यमेवादिमम् ॥२४॥**

व्या०— विभतनो राशीन् विहाय लग्नस्य लिप्ताः खनखोद्धृताः शतद्वयभक्ताः लब्धं पैण्डत्रिके पिण्डादित्रिके लग्नायुः स्यात्। तदंशकसमं निखिलैः सर्वाचार्यैः स्मृतम्। कैश्चित् भतुल्यं लग्नभुक्तराशितुल्यं स्मृतम्। परैर्यस्येशो वली तदेव ( यद्यंशेशो वली तदांशतुल्यं, राशीशो वली चेद्राशितुल्यं ) स्मृतम्। अन्यैरंशायुर्वत् यदायुस्तत्तेन ( राशिपतौ बलिनि राशितुल्यायुषा, अंशेशे बलिनि अंशतुल्यायुषा ) आढ्यं युक्तं कार्यमिति स्मृतम्। अथ चांशतुल्यमिदमखिलोक्तमादिममेव ग्राह्यम् ॥२४॥

अत्रोपपत्तिः-"होरात्वंशप्रतिमम्" आयुर्ददातीति बृहज्जातकोक्तया लग्नभुक्तनवांशतुल्यमायुः सिद्ध्यति। अतोऽनुपातो—यदि शतद्वयकलाभिरेको नवांशस्तदेष्टलग्नांशकलाभिः कतीति लग्ननवांशसंख्या = $\frac{\text{लग्नकला} \times १}{२००}$। पुनरनुपातो—यदि एकनवांशेनैकं वर्षं तदा लग्ननवांशैः

किमिति लग्नायुः $= \frac{१ \times लग्नकला}{१ \times २००} = \frac{लग्नकला}{२००}$ । अन्यत् स्पष्टमेवा गममूलत्वात् ॥२४॥

भा०—राशिरहित लग्न के अंशादि की कला बनाकर उसको २०० से भाग देकर लब्धि पिण्डादि त्रिक में लग्न की आयु होती है। इस अंशायु में सब आचार्यों की सम्मति है। कोई लग्नभुक्तराशि तुल्य लग्नायु कहते हैं। कोई राशीश और अंशेश में जो अधिक बली हो तत्तुल्य कहते हैं। कोई अंशायुर्वत् आयुर्दाय साधन करके उसमें राशीश बली हो तो राशि तुल्य यदि अंशेश बली हो तो नवांश तुल्य वर्ष, और जोड़ने से लग्नायु कहते हैं। इसमें प्रथमोक्त अंशायुतुल्य सर्वाचार्यों का सम्मत है इसलिये वही ग्रहण करना चाहिये ॥ २४ ॥

उ० दी—अथ राशिरहितलग्नं लवाद्यम् । १८।३४।४६ अस्य लिप्ताः १११४।४६ द्विशत्या भक्ताः लब्धं पैण्डत्रिके लग्नायुः ५।६।२६। ३४।४८ ( द्र० १०२—१०४ चक्राणि ) ॥२४॥

अथ चतुर्णामायुषां कतमं कदा ग्राह्यमित्याह—

**अंशायुश्च तनाविनेऽधिकबले पैण्डं निसर्गं विधौ**
**स्याच्चेत्तुल्यबलं द्वयोर्युतिदलं तज्ञायुषोश्चेत् त्रयः**
**त्र्यायुंषि त्रिबलैर्निहत्य च युतिर्वीर्यैक्यहृद्वा त्रिजा-**
**युर्युत्यास्त्रिलवोऽथ जैवमुदितं चेद्धीनवीर्यास्त्रयः ॥२५॥**

व्या०—तनौ अधिकबलायां ( "त्रियां मूर्तिस्तनुस्तनूः" इत्यमरोक्तेस्तनुशब्दस्य नित्यस्त्रीलिंगत्वादधिकबलेऽत्र लिंगविपरिणामेनाधिकबलयामिति तनुविशेषणं ज्ञेयम् ) लग्नेऽधिकबलेंऽशायुः साध्यं, इने सूर्येऽधिकबले पैण्डं पिण्डायुस्तथा विधौ चन्द्रेऽधिकबले निसर्गं नैसर्गिकं साध्यम् । चेद्द्वयोः (लग्नार्कचन्द्राणामन्यतमयोः) तुल्यबलं तदा तज्ञायुषोर्युतिदलं ग्राह्यम् । चेत्त्रयः समबलास्तदा त्र्यायुंषि त्रिबलैर्निहत्य ( लग्नबलेनांशायुः, सूर्यबलेन पिण्डायुः, चन्द्रबलेन निसर्गायुः संगुण्य ( युतिः ( तेषांयोगः ) वीर्यैक्यहृत् तदायुर्भवति । वा त्रिजायुर्युत्यास्त्रिलवस्तृतीयांश आयुर्भवति । अथ चेत्त्रयो हीनवीर्यास्तदा जैवं जीवशर्मायुरुदितं कथितम् ॥२५॥

अत्र युक्तिः—"अंशोद्भवं विलग्नात् पैण्डं भानोर्निसर्गजं चन्द्रात् । एतेषां यो बलवानेकतमं तस्य चिन्तयेदायुः ॥ लग्नदिवाकरचन्द्रा-

त्रयोऽपि बलरिक्ततां यदा यान्ति। परमायुष स्त्र्यंशं ददति खगा जीवशर्मोक्तम्॥" इति सारावलीवचनेन बलवशादायुर्ग्रहणं यदुक्तं तद्युक्तम्। यदि द्वौ तुल्यबलौ तदा बलद्वयवशादायुर्द्वये प्राप्ते सत्येकतरायुरवलम्बनं न समुचितमित्येवायुर्द्वययोगार्धं ग्राह्यमिति पर्यवसितम्। परमत्र तत्तद्बलवशात्प्राप्तेर्द्वयोर्बलयोरेकाकारतायां तत्तदायुषोऽर्धमयुक्तं विलक्षणयोर्द्वयोर्बलयोरेकाकारता योगार्धे विश्रान्ता। अतस्तत्स्फुटतार्थमनुपातः—यदि बलद्वययोगार्धेनैतदायुरर्धं लभ्यते तदायुःप्रापकैतद्बलेन किमिति $= \frac{\text{आ}}{2} \times \frac{\text{इब}}{\text{बयो}\frac{1}{2}} = \frac{\text{आ} \times \text{इब}}{\text{बयो}}$ । एवं द्वितीयस्य $\frac{\text{आ}' \times \text{इब}'}{\text{बयो}}$ । अनयोर्योगः $= \frac{\text{आ} \times \text{इब} + \text{आ}' \times \text{इब}'}{\text{बयो}} =$ वास्तवायुः। एवं त्रिषु तुल्यबलेषु तत्तदायुस्तत्तद्बलेन संगुण्य तद्योगं बलत्रययोगेन भजेल्लब्धं मिश्रायुः स्यादित्युपपन्नम्। अत्र बलतुल्यता हीनत्वं मध्यत्वमधिकत्वमादाय मन्तव्या। न च विपल्यंशपर्यन्तबलसमत्वं ग्राह्यम्। विशेषार्थं (१०६) चक्राधस्थगद्यं विलोक्यम्॥२५॥

भा०—लग्न, सूर्य और चन्द्रमा इन तीनों में यदि लग्न अधिकबल हो तो अंशायु, यदि सूर्य अधिक बल हो तो पिण्डायु, यदि चन्द्रमा अधिक बल हो तो निसर्गायु ग्रहण करना चाहिये। यदि इनमें किसी दो का बल तुल्य हो तो दोनों की आयु के योगार्ध आयु ग्रहण करना चाहिये (अर्थात् लग्न रवि तुल्य बल हो तो अंशायु पिण्डायु के योगार्ध, यदि लग्न चन्द्र तुल्य बल हों तो अंशायु निसर्गायु के योगार्ध, और रवि चन्द्र तुल्य बल हो तो पिण्डायु निसर्गायु के योगार्ध करना)। यदि लग्न, रवि, चन्द्र, ये तीनों तुल्य बल हो तो तीनों आयु को अपने २ बल से गुना कर सबका योग कर उसमें तीनों के बल के योग से भाग देकर जो लब्धि हो अथवा तीनों आयु के योग का तृतीयांश आयु ग्रहण करना चाहिये। यदि तीनों हीन बल हो तो जीवशर्मोक्त आयु ग्रहण करना। यहाँ बल की तुल्यता में यदि दोनों अधिकबल हो अथवा दोनों मध्य बल हो तो तुल्य बल समझे जाते हैं॥२५॥

उ० दी—अथात्रोदाहरणे लग्नचन्द्रयोर्बलं षड्रूपाधिकमतो लग्नबलघ्नदिनीकृतांशायुषश्चन्द्रबलघ्नदिनीकृतनिसर्गायुषश्च योगः तयोर्बलयोगेन भक्तः तदा मिश्रायुः स्यादिति। तद्यथा रवेर्दिनीकृतांशायुः ३०३१।४२।३६ इदं लग्नबलेना ८।०१।३७ नेन गुणितम् २४३३५।२२।०४ एवं सर्वेषां (द्र० १०५ चक्रम्)। एवं रवेर्दिनीकृतनिसर्गायुः

४०३६।२८।२७ चन्द्रबलेना ७।४८।१८ नेन गुणितम् ३१५२८।०५।४५ एवं सर्वेषाम् ( द्र० १०६ चक्रम् )। अथ लग्नबलघ्नदिनीकृतांशायुप-श्चन्द्रबलघ्नदिनीकृतनिसर्गायुपश्च योगः ५५८६३।२७।४६ सवर्णितः २०११०८४६६ एवं सर्वेषाम् ( द्र० १०७ चक्रम् )। अयं लग्नचन्द्र-योर्बलयोगेना १५।४६।५५ नेन सवर्णितेन ५६६६५ भक्तः ३५।२८।३१। ४२ इदं दिनादिमिश्रायुः ( द्र० १०६ चक्रम् ) ॥२५॥

अथ हीनबलत्वादिलक्षणं तथांशायुषो बहुसंमतत्वं तथा केषा-मिदमायुर्घटत इत्याह—

**त्र्यल्पे हीनबलो बली षडधिके वीर्ये ग्रहश्चोदयो**
**भिन्नं स्वस्वमते स्मृतायुरिति यत्प्राज्ञैर्व्यवस्थापितम्।**
**अंशायुर्बहुसम्मतं भवति यत्सत्यं च सत्योदितं**
**स्याद्धर्मिष्ठसुशीलपथ्यसुभुजां न स्यादिदं पापिनाम् ॥२६॥**

व्या०—त्र्यल्पे रूपत्रयाल्पे वीर्ये सति ग्रह उदयो लग्नं च हीन-बलः स्यात्। षडधिके षड्रूपाधिके वीर्ये बली। त्र्यधिके षडल्पे च बले मध्यबल इत्यर्थत एव सिद्ध्यति। इति स्मृतायुः प्राज्ञैः स्वस्वमते भिन्नं यद् व्यवस्थापितं तत्र सत्योदितं सत्याचार्योक्तमंशायुर्बहुसम्मतं स्यात्। इदमायुः धर्मिष्ठसुशीलपथ्यसुभुजां जनानां सत्यं स्यात्। न पापिनाम्। पापिनां न घटते इत्यर्थः ॥२६॥

अत्र युक्तिः—बलानि षडेव सन्ति तत्र प्रत्येकं यदि पूर्णात्मकं रूपतुल्यं गृह्यते तदा षड्रूपाणि भवन्त्यतः षड्रूपबलवान् सम्पूर्ण-बलोपपन्नो बली स्यादिति समुचितमेव। तथा षड्रूपाधःसंनिहितं मध्यबलः षड्रूपाणामधः सांनिध्यं तदर्धात्मकरूपत्रयपर्यन्तम्। मध्य-बलाधःसंनिहिते रूपत्रयाल्पे हीनबलत्वमित्यपि युक्तमेवेत्यलं पल्लवि-तेन। तथा च पापकर्मणाऽऽयुःक्षयत्वात्स्वस्वधर्मनिष्ठेष्वेव तत्सत्यता भवितुमर्हतीति ॥२६॥

भा०—ग्रह अथवा लग्न का षड्बल रूपत्रय ३ से अल्प हो तो हीन बली यदि ६ से अधिक हो तो बली होता है। यहाँ ३ से अधिक, और ६ से अल्प जिसका षड्बल हो वह मध्य बली अर्थ से ही सिद्ध होता है। पूर्वोक्त चतुर्विध आयु आचार्यों ने अपने अपने मत से भिन्न भिन्न कही है उनमें सत्याचार्योक्त अंशायु बहुत आचार्यों से स्वीकृत और सत्य होती है। यह आयु धर्मिष्ठ, सुशील और

पथ्य भोजनादि करने वालों को सम्पूर्ण मिलती है। पापियों को पूरी आयु नहीं होती है ॥२६॥

उ० दी—स्पष्टम् ॥ २६ ॥

अथ शिष्यसन्देहनिराकरणार्थमाह—

**हानिर्योऽस्तमितेऽरिभेऽप्यनुमतांऽशोत्थेऽल्पबुद्ध्या न तद्**
**यस्माच्चैष्टिक आश्रयेऽस्ति निखिलैः पिण्डादिपूक्ता ततः।**
**आयुः सौरमिदं यतोऽब्दगणना सौरात्ततः सूरिभिः**
**प्रोक्तं सत्यमसत्यदल्पकथितं नाक्षत्रकं सावनम् ॥२७॥**

व्या०—अस्तमेतिऽरिभे ग्रहे या हानि 'स्वोचोनो द्युचर" इत्यादिनाऽर्धत्र्यंशतुल्या कथिता सा केनचिदाचार्येणांशोत्थे अंशायुर्दायेऽल्पबुद्ध्याऽनुमता स्वीकृता, तत्र, तन्मतं न समीचीनमित्यर्थः। यस्मात् सा हानिश्चैष्टिके, आश्रये गुणकेऽस्ति; ततो निखिलैः सर्वैः पिण्डादिपूक्ता न चांशायुषीत्यर्थः। इदमायुः ( वर्षादि ) सौरं स्यात् यतोब्दगणना सौराद् भवति। यथोक्तं भास्करेण—"वर्षायनर्तुयुगपूर्वकमत्र सौरात्" इति। ततः सूरिभिः प्रोक्तं सौरं सत्। अल्पकथितं तुच्छजनेन कथितं यन्नाक्षत्रं सावनं वा तदसत् ॥२७॥

अत्र युक्तिः सुगमागममूलैव ॥ २७ ॥

भा०—अस्तमे, अर्धहानि और शत्रुगृह में त्र्यंशहानि जो कही गई है उसको कोई २ अल्प बुद्धि वाले अंशायु में भी मान लिये हैं किन्तु यह ठीक नहीं है। क्योंकि अर्धत्र्यंशहानि चेष्टा गुणक और आश्रय गुणक में है इसलिये सब आचार्य पिण्डादित्रिकायु में कहे है अंशायु में नहीं। और यह आयु वर्षादि सौर होता है। क्योंकि वर्ष की गणना सौर से ही होती है। इसलिये जो आचार्य सौर मानसे आयु कहे हैं वह सत्य ( माननीय ) है। और जो अल्पज्ञ नाक्षत्र अथवा सावन मानसे कहे हैं वह असत् ( मानने योग्य नहीं ) है ॥ २७ ॥

उ० दी—स्पष्टम् ॥ २७ ॥

अथ प्राणिनां परमायुःपुरस्सरं मनुष्येतरायुरानयनमाह—

**पञ्चाहं नखभूसमा नकरिणां व्याघ्राब्जादेर्नृपा**
**गोकाल्योश्च जिनास्तथोष्ट्रखरयोस्तत्त्वानि सूर्याः शुनाम्।**

अश्वायुः परमं रदा नृवदिहानीयायुरेषां परा-
युर्निघ्नं नृपरायुषा च विहृतं तेषां स्फुटायुर्भवेत् ॥२८॥

व्या०—पश्चाहं नखभूसमाः ( पञ्चदिनाधिकविंशत्यधिकशत-वर्षाणि ) नृकरिणां ( मनुष्याणां गजानां च ) परममायुः स्मृतम्। व्याघ्राद्यजाद्रेन्द्रपाः षोड्श वर्षाणि, गोकाल्योर्गोमहिष्योर्जिनाश्चतु-र्विंशतिः, तयोष्ट्रखरयोः तत्त्वानि पञ्चविंशतिः, शुनां कुक्कुराणां सूर्या द्वादश, परमं अश्वायू रदा द्वात्रिंशत् समा वर्षाणि परमायुः स्मृतम्। अथैषां स्फुटायुःसाधनम्—नृवदिति। इहैषां व्याघ्रादीनां नृवत् मनुष्यायुर्वदायुरानीय तेषां परायुर्निघ्नं नृपरायुषा विहृतं तेषां स्फुटायुर्भवेत् ॥ २८ ॥

अत्रोपपत्तिः—परमायुषि तु प्रत्यक्षमुपलब्धिरेव प्रमाणम्। मनुष्यपरमायुषा मनुष्यवदानीतमश्वादीनामायुर्लभ्यते तदा स्वस्व-परमायुषा किमिति तत्तत्स्फुटायुःस्यादेवेत्युपपन्नम् ॥ २८ ॥

भा०—एक सौ बीस १२० वर्ष पाँच दिन मनुष्य और हस्ती की परमायु, तथा व्याघ्र मेढ़ा आदि की १६ वर्ष, गाए और भैंस की २४ वर्ष, ऊँट और गदहे की २५ वर्ष, तथा कुत्ते की १२ वर्ष, घोड़े की ३२ वर्ष परमायु होती हैं। घोड़े आदि की भी मनुष्यवत् आयु साधन करके उसको अपनी अपनी परमायु से गुना कर मनुष्य की परमायु से भाग देकर लब्ध वर्षादि अपनी अपनी स्फुटायु होती है ॥ २८ ॥

उ० टी०—व्याख्यावलोकनेनैव सुगमम्पद्यम् ॥ २८ ॥

## अथ दशाध्यायः।

तत्रादौ दशास्वरूपं तच्छुभाशुभफलं चाह—

यस्यायुर्यदसौ दशास्य च शुभेष्टोच्चस्वभांशे तथाऽऽ-
रोहा नीचपरिच्युतस्य यदि सा कष्टारिनीचांशभे।
त्यक्तोच्चे त्ववरोहिणी भवति सा मध्योच्चमित्रस्वभां-
शे सद्दृष्टयुतस्फुरत्करबलिष्ठेष्टाधिके स्याच्छुभा ॥२९॥

व्या०—यस्य ग्रहस्य यदायुरसौ अस्य ग्रहस्य दशा भवति।

इष्टोच्चस्वभांशे ( मित्रस्योच्चस्य, स्वस्य वा भांशे राशौ नवांशे वा ) स्थितस्य ग्रहस्य दशा शुभा भवति। तथा नीचपरिच्युतस्य ग्रहस्य दशा आरोहा शुभफला भवति। यदि नीचपरिच्युतो ग्रहोऽरिनीचांशभे स्थितस्तदा साऽऽरोहा दशापि कष्टा स्यात् ( मिश्रफलदा भवतीत्यर्थः )। त्यक्तोच्चे ( उच्चं त्यक्त्वाऽग्रस्थे ) ग्रहे त्ववरोहिणी अशुभफलदा दशा स्यात् त्यक्तोच्चे ग्रहे मित्रस्वभांशे स्थिते सावरोहादशापि मध्या मिश्रफलदा भवति। सद्दृष्टेष्टयुतस्फुरत्करबलिष्टेष्टाधिके त्यक्तोच्चे ग्रहे सति सावरोहिणी दशापि शुभा स्यादिति ॥२६॥

अत्र युक्तिः सुगमाऽऽगममूला च ॥२६॥

भा० – जिस ग्रह की जितनी आयु है उतनी ही उसकी दशा होती है। यदि ग्रह मित्र की राशि वा नवांश में हो अथवा अपनी राशि वा नवांश में हो किंवा अपनी उच्च राशि में वा उच्चराशि के नवांश में हो तो दशा शुभफल देने वाली होती है। यदि ग्रह अपनी नीच राशि को छोड़कर आगे हो तो, ( उच्चाभिमुख होने के कारण ) उसकी दशा आरोहिणी ( शुभफलदायी ) होती है। यदि नीचच्युत ग्रह शत्रु नीच राशि वा नवांश में हो तो आरोहा दशा भी अशुभ फल देती है। यदि ग्रह उच्च राशि को छोड़ कर नीचाभिमुख हो तो उसकी अवरोहिणी ( अशुभफला ) दशा होती है। यदि त्यक्तोच्चग्रह उच्च, मित्र राशि नवांश में वा अपनी राशि वा नवांश में हो तो मिश्र फल देती है। यदि त्यक्तोच्चग्रह शुभ ग्रह से दृष्ट, युत हो वा देदीप्यमान किरण तथा इष्ट अधिक हो तो अवरोहिणी दशा भी शुभ होती है ॥२९॥

उ० दी—अथात्र यस्य ग्रहस्य यदायुर्वर्षाद्यं तदेव दशावर्षाद्यं भवति ( द्र० ११३ चक्रम् )। अत्र दशाक्रमो वक्ष्यमाणप्रकारेणैव ज्ञेय इति ॥२६॥

अथ दशाक्रममाह—

**स्यादाद्या हि दशाधिकौजस इहाङ्गार्काब्जकानां तत-**
**स्तत्केन्द्रादियुजामथ द्विबहवो वीर्यक्रमेणैव हि।**
**चेदोजःसमतायुषोधिकतपायुस्तुल्यता चेद्दशा**
**मौढ्यात् स्यादुदितक्रमात्क्रमविधौ वीर्यं हि तत्रोच्यते॥३०॥**

व्या०—इहात्र अङ्गार्काब्जकानां लग्नरविचन्द्राणां मध्येऽधिकौजसोऽधिकबलस्याद्या प्रथमा दशा स्यात्। लग्नार्कचन्द्राणां द्वयोस्त्र-

याणां वा चेदोजःसमता वलमायं तदाऽऽयुषोधिकतया ( यस्यायुर्वर्षाण्यधिकानि तस्य ) प्रथमा दशा ज्ञेया आयुरतुल्यताऽपि चेत्तदा पूर्वपठितानां प्रथमा दशा भवितुमर्हति । यथा—लग्नार्कयोर्वलायुषोः साम्ये पूर्वपठितत्वात् प्रथमा लग्नस्य, एव लग्नचन्द्रयोरप्याद्या लग्नस्यैव । तथार्कचन्द्रयोर्वलायुषोः सम्ये प्रथम पठितत्वात् सूर्यस्यैवाद्या दशा स्यात् । कुत्रचित् पुस्तके 'इहार्केन्दूदयानाम्' इति पाठो दृश्यते तदसङ्गतम् । सर्वेषु जातकग्रन्थेषु "लग्नार्कचन्द्राणामिति" क्रमस्यैव पठितत्वात् । ततोऽनन्तरं तत्केन्द्रादियुजां लग्नार्कचन्द्राणां यस्याद्या दशा तस्मात् केन्द्रपणफरापोक्लिमस्थितानां ग्रहाणां दशा भवन्ति । पूर्वं केन्द्रस्थस्यानन्तरं पणफरस्थस्य तत आपोक्लिमस्थस्य दशा भवतीत्यर्थः । इहास्मिन् केन्द्रादौ चेद् द्विबहवो द्वित्र्यादयो ग्रहा भवेयुस्तदा वीर्यक्रमेणैव दशा ज्ञेया । यस्य वक्ष्यमाण वीर्यमधिकं तस्य प्रथमा दशा ततस्तदल्पबलस्य ततोऽपि तदल्पबलस्येत्यर्थः । चेद्दोजःसमता तदा आयुषोऽधिकतया ( यस्य ग्रहस्यायुरधिकं तस्याद्या दशा ततो तदल्पायुष इति ) चेदायुस्तुल्यतापि स्यात् तदा मौढ्यात् सूर्यसांनिध्येनास्तमयात् उदितक्रमात् दशा ज्ञेया तत्र क्रमविधौ वीर्यं बलमुच्यते ॥३०॥

अत्रापि युक्तावागम एव प्रमाणम् ॥३०॥

भा०—लग्न, रवि और चन्द्रमा इनमें जो अधिक बली हो उसकी प्रथम दशा होती है । यदि लग्न रवि चन्द्र इन तीनों के वा दो के बल तुल्य हो तो जिसका दशावर्ष अधिक हो उसकी प्रथम दशा होती है । दशा वर्ष में भी समता हो तो श्लोक पाठक्रम में जो पूर्व पठित है उसकी दशा प्रथम होती है । इस प्रकार जिसकी प्रथम दशा सिद्ध हो अनन्तर उस ग्रह से केन्द्रस्थित ग्रह की, तदनन्तर पणफरस्थ ग्रह की, बाद आपोक्लिमस्थ ग्रह की दशा होती है । यदि केन्द्रादि स्थान में दो अथवा दो से अधिक ग्रह हों तो उनमें जो अधिक बली हो उसकी प्रथम दशा, यदि बल में तुल्यता हो तो अधिक वर्ष वाले की, यदि वर्ष में भी तुल्यता हो तो सूर्य सांनिध्य से अस्त होकर जिसका प्रथम उदय हुआ हो उसकी प्रथम दशा होती है । अब आगे श्लोक में दशाक्रम में बल को कहते हैं ॥३०॥

उ० टी—अथात्र दशाक्रमज्ञानं ११२ — ११३ चक्रसम्बन्धिगद्यपद्यावलोकनेनैव स्फुटं भवति किं वृथाविस्तरेणेति ॥३०॥

अथ दशाक्रमबलं तथा रिष्टकररिष्टहरबलं चाह—

चेल्लग्नाद्यदशा स्वभावजफलघ्नौजांसि पाकक्रमे-
ऽर्केन्द्वोश्चेत्प्रथमा खगोदयबलांघ्रिर्भेऽन्यवर्गेऽधितः।
स्वैर्वर्गेशबलैर्हता बलमिहैक्यं मूलितैक्यं परे-
ऽथैवं रिष्टदभंक्तृजे बहुबलो भङ्क्ता तदा रिष्टहृत् ॥२१॥

व्या०—चेद् यदि लग्नाद्यदशा स्यात् तदा स्वभावजफलघ्नौजांसि पूर्वसाधितस्वभावफलेन गुणितानि षड्दलैक्यानि पाकक्रमे दशाक्रमे बलानि भवन्ति। चेदर्केन्द्वोः प्रथमा दशा स्यात् तदा खगोदयबलांघ्रिर्ग्रहाणां लग्नस्य च षड्बलैक्यचतुर्थांशः भे गृहे स्थाप्यः। अन्यवर्गे होरादौ स चतुर्थांशोऽधितः स्थाप्यः। ते स्थापितांकाः स्वैर्वर्गेशबलैर्हतास्तेषां ऐक्यं इह पाकक्रमे बलं भवति। परेऽन्ये मूलितैक्यं मूलितं च तदैक्यमिति बलं वदन्ति। अथैवं रिष्टदभंक्तृजे रिष्टकररिष्टहरयोर्बले साध्ये तत्र भंक्ता रिष्टभंक्ता चेद्बहुबलस्तदा रिष्टहृत् रिष्टनाशको भवति ॥२१॥

अत्रोपपत्तिः—तत्र बलेन दशाक्रमविचारे समभावफलेषु सर्वेषु ग्रहेषु यस्याधिकं बलं तस्य पूर्वं ततस्तदल्पबलस्य ग्रहस्य दशेति यथास्थितबलेन निर्णयः। तत्र रूपतुल्यं समभावफलं प्रकल्प्यानुपातः—यदि सकलग्रहाणां रूपतुल्ये समभावफले ग्रहस्थे तद्बलतुल्यं बलं लभ्यते तदेष्टभावफले किमिति लब्धं दशाक्रमबलम्

$= \frac{\text{ग्रब} \times \text{इभाफ}}{१}$ ।

अथ रविचन्द्रयोश्चेदाद्या दशा तदा तत्र "होरादिवर्गाद्द्विगुणं गृहं यत्" इति यवनवाक्येन राशेर्द्विवर्गात्मकत्वादष्टौ तुल्यवर्गास्तत्र रिष्टकररिष्टहरयोर्ग्रहयोर्बलं अष्टसु स्थानेषु स्थाप्यमत्र स्थानद्वयं गृहसम्बन्धि, स्थानषट्कं च होरादिसम्बन्धिकम्। अत्रापि सुगमार्थमेकक्रमलाभार्थमष्टतुल्यं समबलं प्रकल्प्यानुपातो यदि राशीशस्याष्टतुल्ये समबले राशिस्थग्रहोदयबलतुल्यबलं लभ्यते तदेष्टराशीशबले किमिति दशाक्रमबलम् $= \frac{\text{ग्रहोदय ब०} \times \text{राशीश ब०}}{८}$ ।

* बहुषु पुस्तकेषु "भंक्तृजेऽधिकबले" इति प्रामादिकपाठोऽनभिज्ञैः प्रक्षिप्तः।

इदं द्विगुणितं राशिस्थानीयबलम् = $\frac{\text{ग्रहोदयब०} \times \text{राशीशब०}}{४}$ ।
गृहाद् होरादेरर्धमितत्वा "दन्यवर्गेऽर्धितं" इत्युक्तम्। ततश्चैषामैक्यं सर्वबलमित्यपि समुचितम्। तथा च यद्बलमधिकं तन्मूलमप्यधिकमेवेति सर्वबलस्य मूलग्रहणेऽपि न कापि हानिः। यत्तु मूलितानमैक्यं (प्रत्येकं मूलमादाय तदैक्य) बलमिति कैश्चिद् व्याख्यातं तन्निर्मूलत्वादसङ्गतमिति सुधीभिर्विभाव्यम्। अन्यत्स्पष्टमेव ॥३१॥

भा०—यदि लग्न की प्रथम दशा हो तो स्व स्व भावफल से ग्रहके षड्बलैक्य को गुना करने से दशाक्रम में बल होता है। यदि रवि अथवा चन्द्रमा की प्रथम दशा हो तो ग्रह तथा लग्नके षड्बलैक्य का चतुर्थांश करना उसको गृहस्थान में लिखना, तथा उसीका आधा होरादि षड्वर्ग में लिखना फिर उन सबको अपने वर्गेश के बलसे गुना करके सबका योग करना तो दशाक्रम में बल होता है। कोई आचार्य योग के मूल लेकर दशाक्रम में बल मानते हैं। कोई प्रत्येक का अलग अलग मूल लेकर उनके योगको दशाक्रम में बल मानते हैं किन्तु वह युक्तिशून्य मालुम होता है। इसलिये सबका योग अथवा सर्वयोग का मूल ही वास्तव बल है। इस प्रकार रिष्टकर, रिष्टहर दोनों ग्रहके बल साधन करें। यदि रिष्टहर अधिक बली हो तो रिष्टभंग करता है ॥३१॥

उ० दी०—अथात्रोदाहरणे लग्नबलाधिकत्वाल्लग्नस्यैव प्रथमा दशा तेनात्र स्वस्वग्रहभावजफलेन (१० चक्रस्थेन) ग्रहस्य स्वानि स्वानि षड्बलैक्यानि गुणितानि दशाक्रमबलानि भवन्ति। तद्यथा—रवेर्भावफलेना ००।२८।३३ नेन रवेः षड्बलैक्यं ५।४६।२५ गुणितं जात रवेर्दशाक्रमबलम् २।४४।५० एवं सर्वेषां ग्रहाणां साध्यम् (द्र० ११२ चक्रम्)।

अथ रिष्टकरहरस्योदाहरणम्—रवेः षड्बलैक्यम् ५।४६।२५ एतदंघ्रिः १।२६।३६ रविः शनिगृहे वर्त्तते तेन शनिषड्बलैक्येना ६।१२।५२ नेन गुणित (१।२६।३६) × (६।१२।५२) = ८।५८।१० इदं रवेर्गृहसम्बधिरिष्टकरहरबलम्। एवञ्च होरायां *रविबलाङ्घ्र्यर्धम् ००।४३।१८ रवि स्वहोरायां वर्त्ततेऽतः स्व*बलेना ५।४६।२५ नेन गुणितम् (००।४३।१८)×(५।४६।२५) =४।१०।०० इदं होरासम्बन्धिरिष्टश्रहरबलम्। एवं द्रेष्काणादौ बलाङ्घ्र्यर्धं द्रेष्काणादिस्वामिबलेन निघ्नं स्वस्वबलं ज्ञेयम्। तत्र

गृहादिबलानां योगः योगबलं भवति ( द्र० १११ चक्रम् ) 'मूलित्रैश्च परे" एतदर्थमेतच्चक्राधो गद्यपद्यमवलोक्यमिति ॥ ३१ ॥ *

अथ रिष्टकरहरग्रहयोर्बलसाम्ये निर्णयमाह—

**भङ्क्तू रिष्टकृतो हिताहितशुभासत्त्वं च नीचोच्चभा-**
**स्तायस्याश्रयतां विचार्य मतिमान् रिष्टस्य भङ्गं वदेत् ।**
**श्रेष्ठं रिष्टहृतौ दशाक्रम इहौजः श्रीधरायोदितं**
**कष्टेष्टबलान्तरात्क च कृतं तद्युक्तिशून्यं त्वसत् ॥३२॥**

व्या०– भङ्क्तू रिष्टभगकरस्य, रिष्टहृतो रिष्टकरस्य चेति ग्रहद्वयस्यापि हिताहितशुभासत्त्व ( हितमिष्टमहित कष्टं शुभत्वमशुभत्वं ) च पुनर्नीचोच्चभास्तायस्य सकलस्याप्याश्रयतां विचार्य मतिमान् रिष्टस्य भंगं वदेत् । इहात्र रिष्टहृतौ दशाक्रमे श्रीधरायोदितमोजो बलं श्रेष्ठम् । क च कुत्रापि ( श्रीपत्यादिपद्धतौ ) कष्टेष्टबलान्तरात् दशाक्रमबल कृतं तद् युक्तिशून्यमसच्च ज्ञेयमिति ॥ ३२ ॥

अत्र श्रीधरायोदितबलस्य श्रेष्ठत्वं, श्रीपत्यायोदितबलस्य युक्तिशून्यत्वमसत्त्वं चोदाहरणदीपिकायां स्फुटं प्रदर्शितमलमत्र लेखप्रपञ्चेनेति ॥ ३२ ॥

---

* अत्र प्रसङ्गाच्छ्रीपतीयरिष्टकरहरबलस्योदाहरणम् । तत्र तावद्बलानयनपद्यम् ।

'यच्छुभाशुभबलान्तराद्बल रिष्टभगकरखेटयो पुन ।
सैनवर्गदलहृद्बसञ्चक सद्दल भवति शेषवर्गजम् ॥ १ ॥
भादिवर्गपतिवीर्यसगुण जायते बलमरिष्टकारिण ।
रिष्टभक्तुरपि सप्तवर्गत तद्धि सर्वबलसयुतिस्तयो ॥ २ ॥

अथात्रेष्टगुणित रवे पडबलैक्यम् ०२ । ४१ । ५० तथा कष्टगुणितच २ । ३७ । ०३ अनयोरन्तरम् ०७ । १८ । ४७ चतुर्भक्त ०० । ०२ । १२ ३८ गृहकोष्टके भसञ्चक जातम् । एतदर्धम् ०० । ०१ । ३६ होरादिषड्वर्गेषु भसञ्चक ज्ञेयम् । अथ गृहकोष्ठस्य भसञ्चकं ०० । २ । १२ गृहस्वामिषड्बलेना ६ । १२ । ५२ नेन गुणित जात ०० । १६ । ५३ एव होराकोष्ठस्थभसञ्चक ०० । १ । ३६ होरास्वामिबलेना ५ । ४६ । २५ नेन गुणित ०० । ०६ । १४ एव स्वस्वभसञ्च स्वस्वस्व मिबलेन गुणित स्वस्व कोष्ठके लेख्यम् । तेषां गृहादिकोष्ठस्थानां योग १ । २४ । ५६ ३८ रवे रिष्टकरहरबलम् । एवं सर्वेषां ( द्र० ११० चक्रम् ) ।

भा०—रिष्टकर और रिष्टहर दोनों ग्रहों के इष्ट, कष्ट, शुभत्व, अशुभत्व तथा नीच, उच्चराशि, अस्त, आदि शब्द से मूल त्रिकोण, अधिमित्र, मित्र, सम, शत्रु, अधिशत्रु की राशि और जय, पराजय के आश्रयत्व विचार करके मतिमान् रिष्टभंग कहे। यहाँ रिष्टभंग में और दशाक्रम में श्रीधर आदि से कथित ग्रहादिकों का बल श्रेष्ठ है। श्रीपति आदि किसी किसी आचार्यों के ग्रन्थ में कष्ट इष्ट से गुणित षड्बलैक्य के अन्तर पर से बल साधन किया है वह युक्तिशून्य और असत् है ॥ ३२ ॥

उ०टी — अत्र श्रीपत्याद्युक्तबलस्यासङ्गतत्वमुक्तं तद्यथा — रिष्टकर्तुर्वा रिष्टहर्तुर्ग्रहस्य बलपरिपूर्णस्य यदि उच्चबलं रूपार्धं ००।३० चेष्टाबलञ्च रूपार्धं ००।३० तदा इष्टं कष्टं सममेव ०।३० तदेष्टकष्टयबलसाम्यात्तदन्तरबलं शून्यं स्यात्। तदा षड्बलपूर्णोऽपि ग्रहः शुभाशुभबलान्तरात्साधितबलेन शून्यबलः श्रीपतिमते रिष्टकर्ता रिष्टहर्ता वा न भवति। न चैतद्युक्तम्। तथान्या युक्तिः—यद्योच्चबलं शून्यं चेष्टाबलञ्च शून्यं तदेष्टं शून्यं कष्टं रूपं स्यात्। तदा इष्टबलं शून्यं कष्टबलं यथावत्स्यात्। तदा शुभाशुभबलान्तराद्बलमिति कष्टबलशेषाद्बलमुत्पद्यते। तदा तद्बलाधिकोरिष्टहर्ता अस्तं गतो नीचगतश्च कथमरिष्टं हरति। अतश्च यच्छुभाशुभबलान्तराद्बलमिति कृतं तत्सर्वथैवायुक्तमुक्तमिति सुधीभिर्भृशं विचिन्त्यम् ॥ ३२ ॥

अथान्तर्दशाक्रममाह—

अर्धस्यैकभगस्त्रिकोणगृहगस्त्र्यंशस्य चास्ते नगां—
शस्यांघ्रेश्चतुरस्रगो निजगुणैः पक्तैकभे स्याद्बली।
अंशादौ कुरु रूपमत्र समतां कृत्वा च नाशं छिदा-
मंशाप्ताः स्वदशाः पृथक् खलु लवैक्याप्ताः स्युरन्तर्दशाः॥३३॥

व्या०—मूलदशापतेरेकभग एकराशिगतो ग्रहो लग्नं वाऽर्धस्य दशापतिदत्तदशार्धस्य निजगुणैरारोहावरोहोच्चनीचादिभिः पक्ता पाचको भवति। त्रिकोणगृहगः पञ्चमनवमस्थानगतो ग्रहस्त्र्यंशस्य, अस्ते सप्तमस्थानस्थितो ग्रहो नगांशस्य सप्तमांशस्य, चतुरस्रगश्चतुर्थाष्टमस्थानस्थोऽङ्घ्रेश्चतुर्थांशस्य पाचको भवति। एकभे एकराशौ द्वौ, बहवो वा ग्रहाश्चेत्तदा तन्मध्ये यो बली सर्वतो बलाधिकः स (निजगुणैरर्धत्र्यंशादिकैरारोहावरोहादिभिश्च) एक एव ग्रहः पक्ता

( अन्तर्दशापाचकः ) भवति। अत्रांशादौ रूपं ( १ ) कुरु, च पुनश्छिदां छेदानां समतां कृत्वा नाशं कुरु, ततः स्वदशाः पृथक् पृथगंशघ्ना लब्धैनशाता अंशयोगेन भक्ता अन्तर्दशाः स्युरित्यर्थ ॥३३॥

अत्रोपपत्तिः– येऽर्धत्र्यंशाद्यन्तर्दशानां पाचकास्तेषां सर्वेषामन्तर्दशायोगो दशाब्दतुल्य एव। तस्मात्सर्वांशयोगेन दशाब्दतुल्यान्तर्दशा भवितुमर्हति। तत्र "योगोन्तरं तुल्यहरांशकानाम्" इत्युक्तेः समच्छेदविधानं कृत्वैव योगोऽन्तरं वा कार्यमिति। यथाऽत्र क्रमेण दशापत्यादीनामंशाः $\frac{१}{२}$ । $\frac{१}{३}$ । $\frac{१}{४}$ । $\frac{१}{७}$ । $\frac{१}{१}$ समच्छेदीकृता यदि $\frac{अं}{ह}$ । $\frac{अं}{ह}$ । $\frac{अं^{II}}{ह}$ । $\frac{अं^{III}}{ह}$ एषां योगः $\frac{अयो}{ह}$ अतोऽनुपातो यदि सर्वांशयोगेना ( $\frac{अयो}{ह}$ ) नेन दशातुल्यान्तर्दशा लभ्यते तदा पृथक् पृथगंशेन किमिति $= \frac{दशा \times अं}{\frac{अयो. ह}{ह}}$

$= \frac{दशा \times अँ}{अयो}$ एवं पृथक् पृथगन्तर्दशामानं स्यात्। अत उपपन्नम्। शेषयुक्तिः स्फुटैव ॥३३॥

भा०—दशापति के साथ एक राशि ) में रहनेवाला ग्रह मूल दशा के आधे का पाचक (अन्तर्दशा पति ) होता है। दशापति से त्रिकोण ५।९। में रहनेवाला दशा के तृतीयांश का पाचक होता है। सप्तम ७ स्थान में रहनेवाला सप्तांश का, चतुरस्र ( ४।८ ) में रहनेवाला चतुर्थांश का पाचक होता है। सब ग्रह अपने अपने गुण ( आरोहावरोह उच्च नीच आदि ) के अनुसार शुभाशुभ फल का पाचक होता है। यदि एक राशि में अधिक ग्रह हों तो उन में जो सब से बली हो वही एक अपने गुणानुसार अन्तर्दशा पाचक होता है। यहाँ प्रत्येक अन्तर्दशा पाचक के अंशस्थान में रूप ( १ ) लिखकर यथा प्राप्त अर्धत्र्यंशादि लेखे। फिर सब का समच्छेद करके छेदों को त्याग कर दे। फिर मूलदशापति की दशा को पृथक् पृथक् अंश से गुना करके सब अंशों के योग से भाग देने से लब्धि पृथक् पृथक् अन्तर्दशा होती है ॥ ३३ ॥

अन्तर्दशाक्रम—

प्रथम दशापति की अन्तर्दशा फिर पठितक्रमस्थानस्थित ग्रह की दशा होती है। कहा भी है–

"आदावन्तर्दशापाकपतेस्तत्क्रमतोऽपराः" इति।

७० दी—अथ लग्नदशायामन्तर्दशाविचारस्तत्र प्रथमान्तर्दशा लग्नस्यैवातः रूपांशतले रूपहरो देयः $\frac{१}{१}$ । अथ दशापतेर्नवमस्थानस्थितानां मध्ये बुधो बलाधिकस्तेन स त्र्यंशापहारकोतः रूपांशतले हरत्रयं देयम् $\frac{१}{३}$ । अत्र सप्तमस्थाने ग्रहाभावत्वान्न नगांश इति । चतुरस्रगो गुरुस्तेन चतुर्थांशापहारकः $\frac{१}{४}$ । अथैषां लग्न बुधगुरूणामंशयोगार्थं न्यासः $\frac{१}{१}$ । $\frac{१}{३}$ । $\frac{१}{४}$ अत्र "अन्योन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेवम्" इत्यनेन समच्छेदिता अंशाः $\frac{१२}{१२}$ । $\frac{४}{१२}$ । $\frac{३}{१२}$ एते समच्छेदीभूताश्छेदविहीनाश्च १२ ॥ ४ ॥ ३ एते गुणकाराः एकीकृता १९ एष भागहारः । अथ दशापतिदायः । ११ ११ । १९ । ५४ । ०० द्वादशगुणितः १४३ । ७ । २८ । ४८ । ०० अयं भागहारेण १९ नेन भक्तः ७ । ६ । २२ । २ । ३२ इयं मूलदशापतेर्लग्नस्यान्तर्दशा । पुनरपि मूलदशापतिदायस्यास्य ११।११।१९।५४।०० चतुर्गुणितस्य एकोनविंशत्याभागमपहृत्यासम् । २ । ६ । ७ । २०।५० इयं त्र्यंशपाचकस्य बुधस्यान्तर्दशा । पुनरपि मूलदशापतिदायस्यास्य ११।११।१९।५४।०० त्रिगुणितस्य ३५।१०।२९।४२।०० एकोनविंशत्या भागमपहृत्यासम् ११।१०।२०।३०।३८ इयं चतुर्थांशपाचकस्य गुरोरन्तर्दशा ( द्र० ११४ चक्रम् ) । एव ११५ १२१ चक्राणि ज्ञेयानि ) ॥ ३३ ॥

अथ विदशादिकमाह—

**इत्थमाभ्यो विदशास्ततोऽप्युपदशास्ताभ्यश्च सूक्ष्मं फलं**
**पञ्चांशोनदिनद्वयं तु कलयेत्पायुः कृतं दृश्यते ।**
**एतैः खेटलवान्तरेण च भवेन्मासान्तरं चायुषः**
**प्रोक्तं यैस्तु दशादिलग्नजफलं तेभ्योऽतिदृग्भ्यो नमः ॥३४॥**

व्या०—इत्यनेन विधिना आभ्योन्तर्दशाभ्यो विदशाः साध्याः । यथा—अन्तर्दशा एव दशा कल्प्या अन्तर्दशापतिरेव दशापतिः कल्प्यः ततोऽर्धस्त्र्येकभग इत्यादिनाऽन्तर्दशामध्ये विदशा भवन्तीति । ततस्ताभ्यो विदशाभ्य उक्तप्रकारेणोपदशाः साध्याः । ताभ्यः सूक्ष्मं फलं भवति । शिष्यावधानार्थं ग्रहाणां स्पष्टतरं साधनं कार्यमित्याह-पञ्चांशोनदिनद्वयमिति । कलया ध्रुवया फलया कृतं साधितमायु पञ्चांशोनदिनद्वयं ( अष्टचत्वारिंशद्घटिकाधिकैकदिनमित्यर्थः ) दृश्यते । एतैर्ब्राह्मसौरार्यादिभिश्च खेटलवान्तरेण ग्रहाणामंशाद्यन्तरेण आयुषो मासान्तरं भवेत् । तथा सत्यपि यैः श्रीपत्यादिभिर्दशादिल-

ग्रजफलमोक्तं तेभ्योऽतिदृग्भ्यो दूरदृष्टिभ्यो नमो नमस्कारोऽस्तु। इत्युपहासवचनम् ॥३४॥

एककलातुल्येन ग्रहान्तरेणायुषः पञ्चांशोनदिनद्वयमन्तरं भवति तद्यथा—यदि नवांशकलाभिरेकं वर्षं लभ्यते तदैककलया किमिति $=\frac{१\times१}{२००}=$ वर्षात्मकमायु षष्ट्यधिकशतत्रयेण संगुण्य दिनात्मकमायुः $=\frac{३६०}{२००}=२-\frac{१}{५}$। तथांऽशाद्यन्तरेण मासाद्यन्तरं भवति यथा—यदि नवांशकलाभिः २०० द्वादशमासा लभ्यन्ते तदैकांशकलाभिः किमिति $=\frac{१२\times६०}{२००}=\frac{१८}{५}=३+\frac{३}{५}=$ मासाद्यायुः। अत आचार्योक्तं सुष्ठुतरम्।

भा०—जैसे अन्तर्दशा साधन किया है इसी प्रकार अन्तर्दशा से विदशा का साधन करे और विदशा से उपदशा साधन करे उस से सूक्ष्म ( स्पष्ट ) फल होता है। ग्रह में एक कलातुल्य अन्तर होने से आयुर्दायों म एक दिन ४८ घटी अन्तर होता है क्योंकि एक कला पर से आयुर्दाय बनाते हैं तो १ दिन, ४८ घटी होती है। और भिन्न भिन्न पक्ष ( ब्राह्म सौर आदि से ) ग्रह साधन करने से अंशादिक अन्तर होता है। इसलिये आयुर्दाय में मासादि अन्तर हो सकता है। तब भी उसी रीति से बनाये हुये ग्रहादिक से जो श्रीपति आदि आचार्य दशा फल लग्न फल आदि करे हैं उन दूर दर्शियों को मेरा नमस्कार है ॥ ३४ ॥

उ० दी—अथान्तर्दशावत्पादय एव दशाः कल्प्याः। अन्तर्दशाधीशो दशाधीशः कल्प्यः। ततोऽर्द्धस्यैकभग इत्याद्युक्तरीत्यान्तर्दशा-मध्ये विदशा ज्ञेयाः। तद्यथा—गुरोर्दशान्तर्दशामध्ये प्रथमा गुरोर्विदशा। तेन गुरोरंशस्या १ स्य। तथा सप्तमस्थानस्थितचन्द्रस्यां शस्य। तथा चतुरस्रगतशुक्रस्या ¼ स्य च। पूर्वोक्तरीत्या समच्छेदितांशाश्छेदविहीनाश्च २८ ॥ ४ ॥ ७ एते गुणकाराः, एषां युतिः ३६ एव भागहारः। अथ दशापतिदायः ४। ५। ८। २६। २८ अष्टाविंशतिगुणितः १२४। ०३। २७। ४५। ०४ भागहारेण ३६ अनेन भक्तः ३। २। ७। ३८। ४ इयं गुरोर्दशान्तर्दशामध्ये गुरोर्विदशा। अथ दशापतिदायस्या ४। ५। ८। २६। २८ स्य चतुर्गुणितस्यै १७। ६। ३। ५७। ५२ षोनचत्वारिंशद्भागमपहृत्याप्तं ००। ५। १३। ५६। ५२ इयं चन्द्रस्य विदशा। अथ दशापतिदायस्या ४। ५। ८। २६। २८ स्य सप्तगुणितस्यै २९। ००। २८। २५। १६ षोनचत्वारिंश-

ज्ञागमपद्धत्यागतं ००।६।१६।५४।३१ इयं शुक्रस्य विदशा (पृ० १२२ चक्रम्)। एवं विदशा एव दशाः कल्प्याः। विदशापतिर्दशापतिः कल्प्यः। ततोऽर्द्धस्यैकमग इत्याद्युक्तप्रकारेण विदशामध्ये उपदशाः साध्याः किमत्र लेखप्रपञ्चेन (पृ० १२३ चक्रम्) ॥३५॥

अतः सूक्ष्मदशाफलार्थं दशाप्रवेशकालिकलग्नसाधनमाह—

शाकोऽब्दा जनिमध्यमार्कभमुखं मासादि तद्युग्दशा-
ब्दाद्यं तत्र शके स भादितरणिर्मध्यो दशादौ भवेत्।
घस्रीभूतदशा पृथक् त्रिकुहता खाङ्काष्टहृत्तद्युता
सा स्यात्सावनिका दशाऽब्दपलयुक्तद्युग्जनिद्युव्रजः ॥३५॥
तस्मात् सावयवाद्गणात्स्वकरणात् साध्या दशादौ खगाः
क्षेपान् जन्मखगान् प्रकल्प्य यदि वा साध्या दशा सावनात्।
ते स्पष्टाश्च तिथिश्च संक्रमवशान्मासो दशादौ तनुः
पूर्वोक्तं जडकर्म चात्र तु मया तल्लाघवं दर्शितम् ॥ ३६ ॥

व्या०—शाको जन्मकालिकशाकोऽब्दाः कल्प्याः, जनिमध्यमार्कभमुखं जन्मकालीनार्कराश्यादिकं मासादिकं कल्प्यम्, तद्युग्दशाब्दाद्यं (तेनाब्दादिना युक्तं दशाब्दाद्यं) कार्यम्। एवं यः शाको यत्र राश्यादिकमुत्पद्यते तत्र तस्मिन् शके दशादौ अग्रिमदशाप्रवेशकाले स मध्यो भादितरणिर्मध्यमः सूर्यो भवेत्। तत्र शाके तत्तुल्यो मध्यमसूर्यो यदा भवति तदैवाग्रिमदशाप्रवेशो भवतीत्यर्थः। अथ तात्कालिकमासाद्यानयनमाह—घस्रीभूतदशेति। घस्रीभूतदशा दिनीकृतदशा पृथक् स्थानान्तरे स्थाप्या सा त्रिकुहता त्रयोदशगुणा खाङ्काष्टहृत् तद्युता (तेन लब्धेन दिनाद्येन युक्ता) पृथक्स्था कार्या (तथा) दशाब्दपलयुक् (दशाब्दतुल्यैः पलैर्युक्ता कार्या) एवं सा सावनिका सावनदिनात्मिका दशा भवति। तद्युग्जनिद्युव्रजः (तया सावनात्मिकया दशया युक्तो जन्मकालिकोऽहर्गणः) कार्यः स दशाप्रवेशकालिकोऽहर्गणो भवति। जन्मदिनीयसूर्योदयकालिकोऽहर्गणस्सूर्योदयाद्गतेष्टघटीपलयुतो जन्मकालिकोऽहर्गणः सावयवो भवतीति ज्ञेयम्। तस्मात् सावयवाद् गणादहर्गणात्, स्वकरणात् (जन्मकाले यस्मात् करणात् साधिता ग्रहास्तस्मादेव करणग्रन्थात्)

दशादौ खगाः साध्याः। यदि वा जन्मखगान् जन्मकालिकचरदेशान्तरादिसंस्कृतमध्यग्रहान् क्षेपान् प्रकल्प्य दशासावनात् ( दशासावनदिनाद्यमेव सावयवाहर्गणं प्रकल्प्येत्यर्थः ) स्वकरणाद्ग्रहाः साध्याः। ( अत्र दशासावन जन्मकालमारभ्य व्यतीतदशासावनयुक्तं ग्राह्यमिति ध्येयम् )। यद्वा केवलदशासावनात्पूर्वदशाप्रवेशकालिकग्रहान् क्षेपान् प्रकल्प्य ग्रहाः साध्याः। ) ते च साधिता ग्रहाः स्पष्टाः कार्याः। तथा स्पष्टार्कचन्द्राभ्यां तिथिश्च साध्या। तथा संक्रमवेशान्मासो ज्ञेयः दशादौ तनुः साध्या। ततः फल वाच्यमिति शेषः। पूर्वोक्तं ( पूर्वाचार्यैः श्रीपत्यादिभिरुक्तं ). जडकर्म अस्ति। अत्रास्मिन् ग्रन्थे तु मया तल्लाघवं दर्शितम् ॥ ३५ ॥ ३६ ॥

अत्रोपपत्तिः—सौरवर्षादावेव शाकारम्भो भवति, तथा रवेरेकराशिभोगकालश्चैकः सौरो मासो भवतीति "शाकोब्दा इत्यादि स भादितरणिमध्यो दशादौ भवेदित्यन्तं "सयुक्तिकमेव। परञ्चैवं दशादिवसा. सौरा एव। अतस्तेषां सावनीकरणायानुपातो—यदि युगसौरदिनैर्युगसौरसावनयोरन्तरं लभ्यते तदेष्टदशादिनाद्यैः किमिति

$$\text{सौरान्तरम्} = \frac{\text{दशादि} \times २२७१७८२८}{१५५५२००००००} = \frac{\text{दशादि} \times १२}{८८६ + \frac{१६५०२७८}{१७८७५२५}} =$$

$$\frac{\text{दशादि} \times १२}{८६०}$$ । स्वल्पान्तरात्। एतेन पृथक्स्था युक्ता सावनिका दशा भवितुमर्हति। किञ्चात्र हरः किञ्चिदधिको गृहीतोऽतः फलेऽल्पत्वं जातम्। अतो युगसौराब्दयोर्दशगुणिताः खाङ्काष्टभक्ता लब्धयुता युगसौरा युगसावनेभ्योऽल्पा भवन्ति तेषां युगसावनानां चान्तरं = १४२३। अतोऽनुपाता—यदि युगसौरवर्षैरिद १४२३ दिनात्मकमन्तरं लभ्यते. तदेष्टदशावर्षैः किमिति दिनात्मकान्तरं =

$$\frac{१४२३ \times \text{दशाव}}{४३२००००}$$ । षष्टिवर्गगुणितघ्रंटात्मकमिष्टान्तरम्

$$= \frac{\text{दशाव} \times ५१२२८००}{४३२००००} = \text{दशाव}$$ । स्वल्पान्तरात्। पूर्वसाधितसावनेष्वेतावती न्यूनताऽऽसीदतो दशाब्दतुल्यं पलं योज्यमेवेत्युपपन्नम्। स्पष्टार्कस्य प्रतिक्षणं विलक्षणत्वान्मध्यमार्के एव दशामासादि योजनं समुचितम्। शेषवासना सुबोधा ॥ ३५-३६ ॥

भा०—जन्मकालिक शाके को वर्ष, और मध्यम सूर्य के राश्यादि को मासादि मानकर पूर्वदशा वर्षादि में जोड़ने से वर्ष स्थान में जो संख्या हो उस शाकाब्द में अग्रिम दशा प्रवेश समय में मासादि तुल्य राश्यादिक मध्यम सूर्य होते हैं। तथा दशा को दिनात्मक बनाकर दो जगह रखे एक स्थान में दिनात्मक को १३ से गुना कर ८९० का भाग देकर लब्धि दिनादि को पृथक् स्थित दिनात्मक दशा में जोड़ें और इसमें दशावर्ष संख्या तुल्य पल जोडने से सावनात्मक दशा होती है। उसको जन्मकालिक अहर्गण में जोड़े तो अग्रिमदशा प्रवेशकालिक सावयव अहर्गण होता है ॥ ३५॥

जन्मदिन के सूर्योदयकालिक अहर्गण में इष्ट घटीपल जोड़ने से जन्मकालिक सावयव अहर्गण होता है। उस दशाप्रवेशकालिक सावयव अहर्गण से जन्मकाल में जिस करण ग्रन्थ से ग्रह दक साधन किया हो उसी करण ग्रन्थ से दशारम्भ काल में ग्रह साधन करें। अथवा सावन दशा को अहर्गण मानकर जन्मकालिक ग्रह को क्षेपक मान कर स्वकीय करण ग्रन्थ से ग्रह साधन करें। फिर उस ग्रह को स्पष्ट क्रिया से स्पष्ट करें। और स्पष्ट सूर्य चन्द्रमा पर से तिथि साधन करें। और सङ्क्रान्ति के वश से मास का ज्ञान करें। फिर दशारम्भ काल से लग्न साधन करें। पूर्वाचार्य (श्रीपति आदि) इस सायनीकरण को विस्तरता पूर्वक कहे हैं। परन्तु मैं यहाँ उससे लाघव से किया हूँ ॥ ३६ ॥

उ० द्दी अत्र जन्मकालिकशकाऽब्दे १७८० स्मिन् जनिमध्य मार्कभमुख १०।२१।११।४३ मासादितुल्यं युक्तं १७८०। १०। ११। ११। ४३ इदं लग्नदशाब्दाद्येना ११। १२। १६। ५४। ०० नेन च युतं जातः शनिदशारम्भकालिकशकाब्दः १७९२ मध्यमार्कश्च १०। १। ५। ४३ अत्र शकोनयाद्रीन्दुकृशानुयुक्तं इत्यादिना कलिगताब्दा ४९७१। लग्नदशारम्भकाले जन्मकालिकः शकाब्दा एव प्रसिद्धाः। अथ गुरुदशारम्भकाले शनिलग्नयोर्दशादियोगेन २६। ११। २। ५२। १६ नेन जन्मकालिकशकाब्दादयः १७८० १०। ११। ११। ४३ युक्ता जाताः शकाब्दाः १८०७ मध्यमार्कश्च ९। १४। ३। ५९ अत्रापि पूर्ववत्कलिगताब्दा ४९८६ एवं सर्वेषान् (द्र० १२४ चक्रम्)।

अथ गुरुदशारम्भकाले लग्नशनैश्चरयोर्दशा व्यतीताऽतस्तयो-र्योगः (११। ११। १६। ५४। ०० )+( १४। ११। २। ५८। १६ ) =२६। ११। २। ५२। १६

पृथक् स्थाप्यः। एकत्र त्रयोदशगुणः १२६००७। १६। २८ खाङ्काष्ट ८९० विभक्तः १४१। ३४। ५३ अनेन द्वितीयस्थो युतः ६८३४। २७। २६ अयं दशाब्दतुल्यै २६ रेमि पलैर्युतो जाता सावनिका दशा ६८३४। २७। ३५। अथात्र जन्मकालिकाहर्गणज्ञानार्थं (१२४) चक्राधः स्थितम् 'देशान्तरेष्टमिश्राख्ये" त्यादि पद्यमवलोक्यम्। तत्र मिथिला-देशान्तरं १। ३५ चालनघटिका च ३। ३१ ऋणात्मकयोरनयोर्योगः ५। ६ पूर्वानीताहर्गणेभ्यः १८११६३४ शोध्यो जातो जन्मकालिका हर्गणः १८११६३३। ५४। ५४। अथ सावनिका दशा जन्मकालिका हर्गणयोर्योगे कृते दशारम्भकालिकाहर्गणो जातः (६८३४। २७। ३५) +(१८११६३३। ५४। ५४)=१८२१४६८। २२। २९। अस्मात्-(सावयवादहर्गणात्) पूर्ववद्ग्रहादयः साध्याः तत्र १२४ १२५—१२६—१२७ चक्रसम्बन्धिगद्ये विशेषो द्रष्टव्यश्चक्राणि च द्रष्टव्यानी-त्यलं पल्लवितेन ॥ ३५—३६ ॥

अथ दशाशुभाशुभफलमाह—

**चन्द्रः प्राप्तदशेश्वरस्य सुहृद्धर्क्षस्वर्क्षसंस्थो दशा-**
**नाथाद् धीनवससमोपचयगो दद्याच्छुभानीति च ।**
**यस्मिन्भेऽत्र विधुः स जन्मनि तनुस्वायादिभावो यदा***
**तत्तद्वृद्धिकरोऽथ तत्क्षयकरः प्रोक्तेतरस्थानगः ॥३७॥**

व्या०—प्राप्तदशेश्वरस्य सुहृद्धर्क्षस्वर्क्षसंस्थो वर्त्तमानदशास्वामिनः सुहृद्भे वा तस्याचभेऽपिवा स्वर्क्षे कर्कटे स्थितश्चन्द्रः शुभानि शुभ-फलानि दद्यात्। वा दशानाथात् धीनवससमोपचयगश्चन्द्रः शुभानि दद्यात्। इत्येवं शुभफलप्रदे सति अत्र दशाकाले विधुश्चन्द्रो यस्मिन्राशौ स्थित स राशिर्जन्मनि तनुस्वायादिभावो (तनुधनसहजसुहृदित्या-दिकः) यो भवति तत्तद्वृद्धिकरो भवति। यथा यदि चन्द्राक्रान्तराशि-स्तनुभावे तदा जनस्य देहसौख्यं, यदि धनभावे तदा धनवृद्धि-रित्यादि ज्ञेयम्। किन्त्वत्र "वधयति विपरीतं रिष्फषष्ठाष्टमेषु" इति वराहवाक्येन यदि शत्रुमृत्युव्ययभावेषु स्थितस्तदा तद्भावस्य नाश एव भवति। अथ यदि प्रोक्तेतरस्थानगश्चन्द्रो भवति तदा तत्तद्भावनाश

* 'तनुस्वायादिभावेष च" इति पाठान्तर क्व।

